॥ श्रीः ॥

# प्रास्ताविकं किञ्चित् ।

अथाऽयमुपक्रम्यते महाकवि,महाशाब्दिक,धर्मशास्त्रमर्मज्ञधुरन्धर, नैकनिबन्धनिर्मातृश्रीशेषकृष्णप्रणीतः **शूद्राचारशिरोमणिर्मुद्रयित्वा** प्रकाशयितुम् । अस्याऽयं प्रथमो भागः पाठकमहोदयानां करकमलेषूपायनीक्रियते ।

अद्यत्वे समुपलभ्यमानेषु शूद्रेतिकर्तव्यताप्रतिपादकेषु धर्मशास्त्रनिबन्धेषु प्रायः प्रथमोऽयमनुभाविनां तादृशनिबन्धान्तराणामुपजीव्यभूत इति प्रतिभाति । तात्कालिकहरिचरणप्रसूतवर्णवंशावतंस दाक्षिणात्यनरपति **पिलाजीराव**समुद्योजितेनैव विदुषा **शेषकृष्णे**नाऽयं निबन्धो व्यरचीति तस्य नरपतेर्विषये सुविवेचितमैतिह्यं ग्रन्थकर्तुः शेषकृष्णस्य च विस्तृतमितिहासं, प्रकाश्यमानग्रन्थसमालोचनं शूद्राचारप्रतिपादक निबन्धान्तरपरिगणनसमालोचने, ग्रन्थीयविषयानुक्रमणिकां चानुपदमेव मुद्रयिष्यमाणैतद्ग्रन्थद्वितीयभागे विस्तृतायां भूमिकायां निदर्शयिष्यामः । यावत्सभूमिको ग्रन्थस्यास्य द्वितीयभागो न भवति दृक्पथातिथिस्तावदमुनैव भूमिकाशून्येन प्रथमभागेन विनोदयन्तु नव्यनिबन्धावलोकनसकौतुकानि चेतांसि सन्तो विपश्चित इति साञ्जलिबन्धमभ्यर्थयते—


सरस्वतीभवनम्
काशी-
२१-३-३३,

विद्वत्कृपाकामुकः,
**नारायणशास्त्री खिस्ते ।**

श्रीमत्सर्वतन्त्रस्वतन्त्र

विद्वद्वरश्रीशेषकृष्णनिर्मितः

# शूद्राचारशिरोमणिः

---

अलिकुलकलगीताऽऽकर्णनोत्तालकर्णा-
स्खलचलनकलोघत्तालवाचालिताशः ।
कलितममलकोशं नर्त्तयन्पुष्कराग्रं
दलयतु दुरितौघं श्रीगणाधीश्वरो नः ॥ १ ॥

अस्ति प्रत्यर्थिपृथ्वीपतिबलजलधिप्राशने कुम्भजन्मा
सन्मानार्हद्विजन्मार्चनपरिचरणप्रीणिताशेषदेवः ।
विष्वद्रीचीनकीर्तिस्फुरदमरसरिद्वीचिनीचीकृताघ-
प्रोल्लाघस्फारसंपद्वितरणनिरतः श्रीपिलाजीनृपालः ॥ २ ॥

अशनवसनहेमक्षेमवाजिप्रदानै-
रहरहरुपनीतैर्येन चाऽऽबालवृद्धम् ।
प्रकटयति जनेषु स्वस्य कामप्रदत्वं
श्रुतिशतपरिगीतं तीर्थराजः प्रयागः ॥ ३ ॥

तीर्थानां निकरं विधाय विकरं येनाऽमरीणां कराः
स्वैरं दूरदिगन्तसङ्गतजनैर्दानैरपि ग्राहिताः ।
आसाद्य प्रथमं त्रिवर्गफलदां वेणीं त्रिवेणीच्छलात्
दृष्टाऽदृष्टपुमर्थसिद्धिमकरोन्नित्यं करस्थामयम् ॥ ४ ॥
धर्माराधनसादराहितमतिः सन्नीतिरीतिस्थिति-
र्नित्यं स्वाश्रितपालनैकनिरतो दाताऽवदाताशयः ।
श्रीगोविन्दपदारविन्दनिरतः सत्त्वाधिको मण्डयन्
वर्षैर्तुर्यसजर्यवर्यविदुरो (?) वर्वर्त्ति सर्वोपरि ॥ ५ ॥

धर्मानशेषान्विदुषामसौ मुखा-
दाकर्ण्य तत्सङ्करशाङ्किमानसः ।
शूद्रो[पका]रार्थमचीकरत्कृती
चतुर्थवर्णोचितधर्मपद्धतिम् ॥ ६ ॥
तदर्थनानुरोधेन कृष्णः शेषनृसिंहजः ।
आलोच्य धर्मशास्त्राणि तनुते शूद्रपद्धतिम् ॥७॥

तत्र तावच्छूद्रोत्पत्तौ श्रुतिः 'ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत' इति। मनुस्मृतिश्च—"लोकानां तु स सृष्ट्यर्थं मुखबाहूरुपादतः। ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्त्तयत्"। इति।

तत्र ब्राह्मणादयश्चत्वारो मुख्या वर्णाः।

यदाह याज्ञवल्क्यः—

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।
निषेकाद्याः श्मशानान्तास्तेषां वै मंत्रतः क्रियाः ॥

इति । तत्प्रयोजकं चाह स एव—

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः संतानवर्द्धनाः ॥ इति ।

पुत्र इत्यपत्योपलक्षणम् । 'सवर्णासु विन्नास्वेष विधिः स्मृत' इत्युपसंहाराद्विधिवदूढासु स्त्रीषु जाताः सजातयः मातापितृसमानजातीया ब्राह्मणत्वादिजातियोगिनो भवन्तीत्यर्थः । वर्णशब्दश्चायं ब्राह्मणत्वादिजातिचतुष्के रूढः । सवर्णग्रहणादसवर्णोत्पन्नानां मूर्द्धावसिक्तादीनां न वर्णत्वम् । सवर्णोत्पन्नानामपि कुण्डगोलकादीनां वर्णत्वं माभूदिति विन्नास्वित्युक्तम् । तेनानूढोत्पन्नानां कुण्डगोलककानीनसहोढपौनर्भवक्षेत्रजानां न वर्णत्वम् । अत्र सजातय इत्यनेन मातापित्रुभयसाजात्यमेव लक्षितं तदेवैषां व्यावर्त्यते । तेन मातृमात्रसजातीयत्वाभिधानमेषां न व्याहन्यते । तथात्वेऽप्युभयसाजात्यस्य लक्ष्यस्य तत्राभावात् । अत एव देवलः—

ब्राह्मण्यां ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत् ।

एवं क्षत्रियविट्शूद्रा ज्ञेयाः स्वेभ्यः स्वयोनिजाः ॥

इति । सवर्णेभ्यः सवर्णासूत्पन्ना इत्यर्थे संस्कृत इति संस्कारार्हो मुख्यो ब्राह्मण इत्यर्थः । कथं तर्हि नारदवसिष्ठविश्वामित्रादीनामयोनिजानां ब्राह्मणत्वम् । तेषां सवर्णविन्नानुत्पन्नत्वात् । मैवम् । न ह्यत्र साक्षात् ब्राह्मणत्वादि लक्ष्यते, वाक्यभेदप्रसङ्गात्, अन्यासेश्च, किन्तु मातापितृसाजात्यमेव । तच्च ब्राह्मणादिजन्ये ब्राह्मणत्वाद्यादाय पर्यवस्यतीत्येतावता तत्र च प्रयोजकीभूतं सवर्णोत्पन्नत्वं वसिष्ठादेर्व्यावृत्तं मातापितृसमानजातीयतामेव व्यावर्त्तयति । न चैतद्विरुद्धम् । न ह्ययोनिजेषु मातापितृजातीयताऽन्येनाप्याश्रीयते । ब्राह्मणत्वं तु तेषु स्मरणलक्षणमीश्वरानुग्रहप्रयोज्यत्वादाधुनिकविलक्षणमेव सुवर्णकलशे घटत्वमिव ।

सर्वसंग्राहकं तु षट्कर्मप्रयोजकीभूताऽदृष्टविशेषोपगृहीतत्वम् । न तु तत्प्रवृत्त्यङ्गम् । अदृष्टादेरतीन्द्रियत्वात् । अत एव विन्नास्वेष विधिः स्मृत इत्युपसंहारोऽपि समञ्जसः । एवं विशिष्टसावर्ण्यात्मा मूर्द्धावसिक्तत्वादिरूपश्च विधिर्विन्नास्वेवेत्यर्थः । तेनाऽविन्नायां मातृजातीयेऽपि क्षेत्रजे कुण्डादौ च विशिष्टात्मा साजात्याविधिर्नेत्यर्थः । वस्तुतस्तु क्षेत्रजेऽपि मातृजाती-

यत्वे प्रमाणाभावः । नियोगस्मरणं हि पुत्रत्वं प्रापयति न तु जातिमपि । पुत्रत्वमपि न तदाक्षेपकमिति वक्ष्यते । यदपि नियोगे क्षेत्रप्राधान्यमुच्यते तदपि न हृद्यम् । 'ओघवाताहृतं बीजमन्यक्षेत्रे प्ररोहती'त्यादि मानवन्यायात् । क्षेत्रिणः सुत इत्यादिवचनात् स्वतन्त्रत्वाच्च क्षेत्रिण एव प्राधान्यसम्भवान्न जात्यापत्तिः । न चैवं धृतराष्ट्रपाण्डवादीनां क्षत्रियत्वाभावे तद्धर्मानापत्तिः । शङ्खविष्णुवचनैस्तेषामपि क्षेत्रजातीयधर्मातिदेशात् विन्नत्वादेर्विशेषस्य तत्र श्रवणात् ।

व्यभिचारोत्पन्नाश्च तु "शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृता" इति तद्बाधनेन शूद्रधर्माण एव भवन्ति । क्षत्रियत्वप्रसिद्धिस्तु तद्धर्मानुष्ठातृत्वादप्युपपन्ना मूर्द्धावसिक्तादिष्विवेति युक्तं प्रतीमः । न च पुत्रत्वे पितृधर्माधिकारे वा सवर्णत्वम्, तच्च, पौनर्भवे कचिदसवर्णपत्न्याः कचिदसवर्णसुतस्य वा सवर्णत्वेपि तद्दर्शनात् । किञ्चैषामसवर्णत्वमाख्याति देवलः—

द्वितीयेन तु पित्रा यः सवर्णायां प्रजायते ।
आरोट इति च ख्यातः शूद्रधर्मा स जातितः ॥
व्रतहीनास्त्वसंस्कार्याः सवर्णास्वपि ये सुताः ।
उत्पादिताः सवर्णेन व्रात्या इति बहिष्कृताः ॥ इति ।

वर्णबाह्या इत्यर्थः ।

बौधायनोऽपि "एतानष्ट विवाहानाहुरेतैः संस्कृताभिरुत्पन्नास्तज्जातीया भवन्ति नान्ये" इति ।

व्यासोऽपि—

भार्याजाताः समानाः स्युः सङ्कराः स्युरतोऽन्यथा ॥ इति ।

मनुश्च—

शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजा स्मृताः ॥ इति ।

अपध्वंसजा व्यभिचारजाः । एतदेव स्पष्टमाचष्टे मनुः—

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान् ।
सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥

मातुरसवर्णत्वदोषेण विगर्हितान् ।

पितृवर्णान्न्यूनीकृतांस्तान्मातुः सदृशानेवाहुर्न तु मुख्यमातृजातीयानेव । सादृश्यं च तद्धर्मप्राप्त्यैव । एवकारश्च शङ्खादिवाक्यं धर्मप्रापकं न जातिप्रापकमिति व्यनक्ति । तथा च स एव—

पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।
ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते । इति ।

क्षत्रिय इत्यादि नामैव भवति, न तु जातिरित्याह । तथा विश्वम्भरशास्त्रेऽपि—

विप्रान्मूर्धावसिक्तो यः क्षत्रि [त्रायां] यायां क्षत्रियैः

समः । इति समत्वमेवोक्तम् ।

अत्रेदमपरार्कसिद्धान्तसर्वस्वम्—विन्नापदस्योपलक्षणत्वेन कानीनादीनां पौनर्भवस्य च वर्णत्वमेव । तथा शङ्खवचनान्मूर्द्धावसिक्तादीनां मातृजातीयत्वं वर्णत्वं चेति । शङ्खधरस्तु कुण्डगोलकादीनां सर्वेषामेव व्यभिचारोत्पन्नानामस्ति ब्राह्मणत्वादीति भवति उपनयनाध्यापनादिसंस्कार इत्याह—"नेत्यन्ये"। "वेत्यपरे"। व्यवस्थितविकल्पश्चायम् । बहुशो व्यभिचारदूषितापत्यानां पातित्यान्न संस्कारः । सकृत् स्खलिताया बलादन्येनोपभुक्ताया अनिच्छन्त्या अपत्यानामदुष्टत्वादस्ति संस्कार इति । तदेतत्सर्वं यमस्मृतिविरुद्धम् । यदुक्तम्—

जारजातः सवर्णायां कुण्डो जीवति भर्तरि ।
मृते गोलकनामा तु जातिहीनौ तथैव तौ ॥
असवर्णासु नारीषु द्विजैरुत्पादिताश्च ये ।
परपत्नीषु सर्वासु कुण्डास्ते गोलकाः स्मृताः ॥
मातृवर्णे च ते प्रोक्ताः पितृवर्णा नव स्मृताः ।
अविवाह्याः सुतास्तेषां बन्धुभ्यः पितृमातृतः ॥ इति ।

इदमेव च मिताक्षराकारमेधातिथिप्रभृतयः

प्रतिपन्नाः । अत एव—

कृच्छ्रं सान्तपनं कुर्याद्धत्वा सङ्कीर्णयोनिजम् ।
सूतं हत्वा तु कृच्छ्रं तु कुण्डं गोलकमेव च ॥

इति यमेन प्रतिलोमसममेव कुण्डादिवधे प्रायश्चित्तमुक्तम् ।

अत्र विशेषः स्मृतिकौमुद्यामुक्तः । अब्राह्मणोत्पन्नयोरेव कुण्डगोलकयोरुपनयनादिसंस्कारनिवृत्तिः न तु ब्राह्मणाद्ब्राह्मण्यामुत्पन्नयोरपि तयोः ।

कुण्डो वा गोलको विप्रः सन्ध्योपासनमात्रवित् ।
स्नानभोजनसन्ध्यासु देवेषु स पठेच्चरेत् ॥
एकान्ते कुटये भुक्त्वा सदृशैः सह सङ्गतः

इतिस्मृतेः। विप्रोत्पन्नतया विप्रपदाभिधेययोः कुण्डगोलकयोः सन्ध्यावन्दनाद्युपदेशेनोपनयनाद्यभ्यनुज्ञानात्। इदं परमं वचः "कुण्डगोलकावपि यथार्हं संस्कार्यौ" इति मिताक्षरोदाहृतं स्मृत्यन्तरम्। स्नानेति। देवालये स्थित्वा, देवस्नानाद्यवसरेषु बन्दिवद्वर्णकान्पठेत्। एकान्ते कुटये कुट्यां वसेदित्येतत्साङ्कर्यपरिहारार्थं नगरवासं निषेधतीत्यास्तां विस्तरः। प्रकृतमनुवर्त्तामहे। उक्तास्तावत्सवर्णोत्पन्ना वर्णा मुख्याः। तद्धर्मांश्च सामान्यतो विशेषतश्चाग्रे प्रपञ्चयिष्यामः। अनुलोमांश्चाह याज्ञ-

चल्क्यः—

विप्रान्मूर्धावसिक्तो यः क्षत्रियायां विशः स्त्रियाम् ।
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा ।

विप्रात् क्षत्रियायां मूर्धावसिक्तो भवति । वैश्यायामम्बष्ठः । शूद्र्यां निषादः । अस्यैव च संज्ञान्तरं पारशव इति । यो मत्स्यघाताजीवी प्रतिलोमजस्तद्व्यवच्छेदेन पारशवनिषाद इत्यसङ्कीर्णव्यवहारश्च । एषु सर्वेषु विन्नास्वित्येवं सम्बध्यते । एवं च परशुरामस्य ब्राह्मणत्वात् क्षत्रियायामुत्पन्नत्वान्मूर्द्धावसिक्तत्वेऽपि स्वतपोऽतिशयादीश्वरानुग्रहाद्वा विश्वामित्रादेरिव ब्राह्मणत्वं ब्राह्मणधर्ममात्रमेव । जातेरुत्पत्तिनिवृत्त्ययोगात् । एवं ब्राह्मणादेरवरासु तिसृषु क्रमेण जायन्ते। एषामेव देवलादिभिः सवर्णादिसंज्ञान्तराण्यपि स्मर्यन्ते । तत्र निषादपारशवादिवत्संज्ञाविकल्पो द्रष्टव्यः । तथा—

वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ॥

क्षत्रियस्य द्वावसवर्णविवाहौ । तत्र क्षत्रियाद्वैश्यायां माहिष्यः शूद्रामुग्रः पुत्र इति द्वौ । वैश्यस्यैको ऽसवर्णाविवाह इति । तस्माच्छूद्र्यां करणो नाम पुत्रो भवतीत्येकः । एष च सावर्ण्यमूर्द्धावसिक्तादिभेदो वि-

न्नास्वेवोत्पन्नानां वेदितव्यो नान्येषामिति । एतच्च प्रागेव प्रपञ्चितम् । एवमेते ऽनुलोमाः षट् भवन्ति तदाह मनुः—

विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः ।
वैश्यस्य वर्णएकस्मिन् षडेते ऽपसदाः स्मृताः ॥

त्रिषु क्षत्रियविट्शूद्रेषु द्वयोः विट्शूद्रयोः ।

एकस्मिन् शूद्रे अपकृष्टाः सदस इत्यपसदाः मुख्यवर्णेभ्यो ऽपकृष्टा इत्यर्थः ।

प्रतिलोमजानप्याह योगी—

ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा ।
शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः ।
क्षत्रिया मागधं वैश्या शूद्रात् क्षत्तारमेव च ।
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ।

ब्राह्मण्यामेकस्यां क्षत्रियविट्शूद्रेभ्यः क्रमेण सूतवैदेहचाण्डालास्त्रयो भवन्ति । तथा वैश्यात् क्षत्रियायां मागधः, शूद्रात्तु क्षत्रियायां क्षत्ता, वैश्यायां तु शूद्रादायोगव इति षट् प्रतिलोमजाः । तदेवमनुलोमप्रतिलोमाः सम्भूय द्वादश भवन्ति ।

अत्र वर्णानुलोमप्रतिलोमेषु तारतम्यमाह देवलः—

तेषां सवर्णजाः श्रेष्ठाः श्रेष्ठास्तेभ्यो ऽनुलोमजाः ।

अन्तराला वहिर्वर्णाः पतिताः प्रतिलोमजाः ।

सर्वेभ्यस्तावत्सवर्णजाः श्रेष्ठास्तेभ्योऽन्ये अन्तराला विजातीयमातापितृजन्या असवर्णा इति यावत् । ते चाऽनुलोमप्रतिलोमभेदाद् द्विविधाः । तत्राद्या उत्तमादधमयोनिसम्भूतत्वात्तेभ्यो जनकेभ्यो ऽन्वक् मातृसमानधर्मत्वात् किञ्चित् न्यूनाः । द्वितीयास्तु योन्युत्कर्षे ऽपकृष्टबीजजत्वाद्वर्णबाह्याः पतिता अधमा इत्यर्थः । पतितत्वाभिधानं सम्पूर्णसंस्कारपरिभ्रष्टत्वात् । अमुमेवार्थं पूर्वोत्तरपक्षाभ्यामाह मनुः——

अनार्यायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया ।
ब्राह्मण्यामप्यनार्यात्तु श्रेयस्त्वं केति चेद्भवेत् ।
जातो नार्यामनार्यायामार्यादार्यो भवेद् गुणैः ।
जातोऽप्यनार्यादार्यायामनार्य इति निश्चयः ॥
तावुभावप्यसंस्कार्याविति धर्मो व्यवस्थितः ।
वैगुण्याज्जन्मतः पूर्व उत्तरः प्रतिलोमतः ॥ इति ।

अनार्योऽपकृष्टः आर्य उत्तमजातिः । यदृच्छया अबुद्धिपूर्वमिति तात्पर्यम् । तावुभौ अपकृष्टायामुत्तमबीजज उत्तमायामपकृष्टबीजजश्चेति । तत्र हेतुः वैगुण्यादित्यादि । जन्मतो योनितः । प्रतिलोमतः प्रातिलोम्यादित्यर्थः । असंस्कार्याविती पदर्थे नञ् । मुख्य-

वर्णापेक्षयेषत् संस्कार्यावित्यर्थः । अनुलोमानां शङ्खेन मातृधर्माऽतिदेशात् । प्रतिलोमजानां च मनुना शूद्र-धर्मोपदेशात् । यदाह—

स्वजातिजानन्तरजाः षट् सुता द्विजधर्म्मिणः ।
शूद्राणां तु सधर्माणः सर्वे ऽपध्वंसजाः स्मृताः ।

सम्पूर्णस्तु संस्कारो वर्णेष्वेवेत्यप्याह स एव ।

सुबीजं चैव सुक्षेत्रं जातं सम्पद्यते यथा ।
तथार्याज्जात आर्यायां सर्वसंस्कारमर्हति ।

तत्र च षट्कर्माधिकारो ब्राह्मणानामेव ।

ब्राह्मणा ये स्वयोनिस्था ये स्वकर्मस्ववस्थिताः ।
ते सम्यगुपजीवेयुः षट् कर्माणि यथाक्रमात् । इति

मनुवचनात् । इतरेषां त्रयाणां तु यजनाध्ययनदानानि त्रीण्येव कर्माणीत्याद्यग्रे प्रपञ्चयिष्यामः ।

अनुलोमानामपि मातृधर्मा एव भवन्तीत्युक्तम् । तथा ये च मातुर्जात्या उपलक्षिताः स्वयोनिषु प्रसूयन्ते तेऽपि सदृशान् स्वसमानधर्माण एव जनयन्ति । मातृजात्येति जातेः प्रसवं प्रति कारणत्वासम्भवादुपलक्षण एव तृतीया । इदमेव च जातेरुपलक्षणत्वं नाम यत्तत्राऽसत्या अपि स्वप्रयुक्तधर्मप्रयुक्तिमात्रेण व्यक्तेरन्यतो व्यवच्छेदकत्वं काकादेरिव । न हि मूर्द्धाव-

सिक्तादौ वस्तुतः क्षत्रियतायस्तीत्युक्तं प्रागेव । अथ काकादौ कदाचिद्गेहादिसम्बन्धितया ऽनुभूते उपलक्षणत्वं दृष्टम् । क्षत्रियत्वस्य तु मूर्द्धावसिक्तादौ कदाऽपि नोपलम्भ इति कथमेतदिति चेत्, सत्यम् । यद्यपि तत्समवेतत्वेन तन्नोपलब्धम्, तथाऽपि तज्जनकसमवेतत्वात्तत्सम्बन्धितया ऽस्त्येवोपलम्भः । न हि उपलक्षणत्वे उपलक्ष्यसमवेतत्वं साक्षात्सम्बन्धत्वं वा तन्त्रम् । गृहसम्बन्धिवृक्षस्थितकाके तदसम्भवात् । तस्मान्मातृजात्योपलक्षिता मातृसधर्माणोऽपि स्वयोनिषु तादृशानेव जनयन्तीत्यर्थो व्यवतिष्ठते । तथा मूर्द्धावसिक्तान्मूर्द्धावसिक्तायां विन्नायां जातस्य मूर्द्धावसिक्तधर्मः । एवं माहिष्यादिष्वपि । ये च प्रवरासु स्वस्मादुत्तरासु योनिषु प्रसूयन्ते तेऽपि स्वसदृशा अधमा एवेत्यर्थः । यदा तु मूर्द्धावसिक्तादप्यविन्नायां मूर्द्धावसिक्तायां व्यभिचारादुत्पद्यते, तदा ऽपध्वंसजत्वाच्छूद्रधर्मतैव । तथा ऽन्येषामपि प्रतिलोमजानां द्रष्टव्यम् ।

मनुः—

ये द्विजानामपसदा ये वा ऽपध्वंसजाः स्मृताः ।
ते निन्दितैर्वर्त्तयेयुर्द्विजानामेव कर्मभिः ॥

द्विजानां कर्मभिः द्विजसम्बन्धिशुश्रूषणादि-

भिः । न तु यजनादिभिः । 'शूद्राणां तु सधर्माण इत्युक्तत्वात् ।

अथाऽनुलोमप्रतिलोमधर्माः । तत्रोशनाः—

क्षत्रियाविप्रसंयोगाज्जातो मूर्द्धावसिक्तकः ।
राजन्यः क्षत्रधर्मेभ्यो ऽप्याधिकः स प्रकीर्त्तितः ॥
आथर्वणक्रियां कुर्वन्नित्यनैमित्तिकीं क्रियाम् ।
अश्वं रथं हास्तिनं वा वाहयेद्वै नृपाज्ञया ॥
सैनापत्यं च भैषज्यं कुर्याजीवेच्च वृत्तिषु ।
नृपायां विप्रतश्चौर्यात्संजातो यो भिषक् स्मृतः ॥
अभिषिक्तनृपस्याज्ञां परिपाल्य तु वन्दकः ।
आयुर्वेदमथाष्टाङ्गं तत्रोक्तं धर्ममाचरेत् ।
ज्यौतिषं गणितं वाऽपि कायिकीं वृत्तिमाचरेत् ।
नृपायां नृपसंसर्गात्प्रमादाद् गूढजातकः ॥
सोऽपि क्षत्रिय एव स्यादभिषेके तु गर्हितः ।
शुद्रायां विधिना विप्राज्जातो ह्यम्बष्ठ उच्यते ॥
कृष्याजीवी भवेत्सोऽपि तथैवाग्नेयनर्त्तकः ।
नरवाजिगजानां तु चिकित्सा तस्य जीविका ।

अयं ब्राह्मणबीजजोऽपि योन्यपकर्षादपकृष्टो वचनाच्च मातृजातीयं वैश्यधर्ममात्रं लभते न मुख्यं ब्राह्मणधर्म्मं षाट्कर्म्यम एवं च यदुक्तम् "अन्याभ्यं

वैश्यजातिभ्यः षट्कर्मस्त्वधिकः स्मृतः ॥ इति वासिष्ठायनेन, तत्क्रममूलमित्युपेक्ष्यम ।

वैश्यायां क्षत्रियाज्जातो माहिष्यस्त्वनुलोमजः ।
अष्टाधिकारनिरतश्चतुःषष्ट्यंगकोविदः ॥
व्रतबन्धादिकास्तस्य क्रिया स्युः सकलाश्च ताः ।
ज्यौतिषं शाकुनं शास्त्रं स्वरशास्त्रं च जीविका ॥

विश्वम्भरशास्त्रे—

शूद्र्यां क्षत्रादुग्रजातिर्युद्धशास्त्रादिजीविकः ।
शस्त्रास्त्राभ्यां च कुशलः संग्रामकुशलो भवेत् ॥
अयमेवोग्रो लोके उग्रवर रजपूत इति व्यवह्रियते ।
शूद्र्यां जातः सुतो वैश्यात्करणो लिपिलेखकृत् ॥

इत्यनुलोमजाः ।

विप्रायां सुतः क्षत्रात्सूताख्यो गजबन्धकृत् ।
दमनं तुरगाणां च कुर्यात्तज्जीवनं परम् ।
नृपाद्ब्राह्मणकन्यायां विवाहेषु समन्वयात् ।
जातः सूतोऽत्र निर्दिष्टः प्रतिलोमविधिर्द्विजंः ॥
वेदाऽनर्हस्तथा चैषां धर्माणामनुबोधकः ।
ब्राह्मण्यां तु सुतो जातो वैश्याद्वैदेहकः स्मृतः ॥
पाषाणकाष्ठयोः शिल्पं तस्य जीवनमुत्तमम् ।

सूत्रधार इति लोके ।

चाण्डालाख्यः सुतो जातो ब्राह्मण्यां शूद्रजन्मतः ।
जीवनं चौरवध्यानां कर्प्पटीभूषणैः सदा ॥
सीसमाभरणं तेषां कालायसमथापि वा ।
वध्रीं कण्ठे समाबध्य झल्लरीं कक्षतोऽपि वा ॥
मलापकर्षणं ग्रामे पूर्वाह्ने परिशुद्धिकम ।
नापराह्ने प्रविष्टोऽपि बहिर्ग्रामाच्च नैर्ऋते ॥
पिण्डीभूता भवन्त्यत्र नोचेद्वध्या विशेषतः ।

मनुः—

रात्रौ न विचरेयुश्च ग्रामेषु नगरेषु वा ।
दिवा चरेयुः कार्यार्थं चिन्हिता राजशासनैः ॥
वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया ।
वध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि च ॥

स्मृत्यन्तरे—

दिवा यदा ते गच्छन्ति नगरं कार्यगौरवात् ।
सिंबोलेति समुच्चार्य सकुब्जद्गात्रशङ्किताः॥ इति ॥
वैश्याज्जातः सुतो यः स मागधः क्षत्रयोषिति ।
जीवेत्कथाभट्टकैः स राजन्यगुणबर्णनैः ।

स्मृत्यन्तरे—

क्षत्रिया मागधं वैश्याज्जनयामास वै सुतम् ।
स बन्दिजन इत्युक्तो व्रतबन्धविवर्जितः ॥

शूद्रेभ्योऽ भ्यधिकः किंचित्तस्य जीवनमुच्यते ।
काव्यालङ्कारगद्यादिषट्भाषासु कलाक्षमः ॥
गद्यपद्यानि चित्राणि विरुदानि महीभृताम् । इति ।
क्षत्रियायां वैश्यजातः क्षत्ता वेत्रधरो भवेत् ॥

प्रतीहारः

शुद्रादायोगवो वैश्यायां जातस्तु सुतो भवेत् ।

औशनसे तु—

शालिकाः केचिदत्रैव जीवनं वस्त्रनिर्मितम् ।

इति प्रतिलोमधर्माः ।

अथ सङ्करसङ्कराः ।

वैश्वम्भरे—

ये वर्णसङ्कराकीर्णास्ते सङ्कीर्णा अवर्णकाः ।
जीवनं जातिकर्मैव जातिमात्रोपजीवनम् ॥
व्रात्याद्विप्राद्विप्रपत्न्यामृजुकण्ठः सुतः स्मृतः ।

व्रात्यश्चोक्तो मनुना—

द्विजातयः सवर्णासु जनयन्त्यव्रतास्तु यान् ।
तान् सावित्रीपरिभ्रष्टान् व्रात्यानिति विनिर्दिशेत् ॥
ब्राह्मण्यामृजुकण्ठात्तु जात आवर्त्तकः सुतः ।
आवर्त्तात् द्विजभार्यायां कटधानः सुतः स्मृतः ॥
ब्राह्मण्यां कटधानाद्यः पुत्रोऽसौ पुष्पशेखरः ।

एतैस्तु जीवनार्थाय कार्यं विष्ण्वादिपूजनम् ॥
नृत्यगीतादिवादित्रशङ्खवीणादिवादनम् ।
एतै ऋजुकण्ठावर्त्तककटधानपुष्पशेखरैः ।

अन्यत्र च—

वर्ण्यौ हरिहरौ तैश्च गीतगाथाप्रबन्धकैः ।
चरितैर्देशभाषाभिर्गायन्तज्जीविकाः स्मृताः ॥
लोकाचाराः स्मृतास्तेषां शूद्रधर्मा न हि क्वचित् ।
पुष्पशेखरसंज्ञायां जातो विप्रात्तु यः सुतः ।
स जात्या भोजको नाम सूर्यपूजनजीविकः ।
द्विजोढा भोजकसुता ताभ्यां देवलकः स्मृतः ॥
जात्यैक(?)शाश्वतो ज्ञेयो विष्णुपूजनजीविकः ।
माहिष्यायां द्विजाज्जात आभीरः क्षीरविक्रयी ॥
उदवाहः सुतो विप्राद्वैदेह्यां व्यभिचारतः ।
स छत्रं धारयेत्कुर्यान्नारीविक्रयणं तथा ॥

ब्राह्मण्यां वैश्याद्वैदेही ।

विप्रान्निषादाद्यो जातो वैष्टिकः स्कन्धवाहकः ।
विप्राच्छूद्र्यां निषादो लोके 'कहार'इति प्रसिद्धः ॥
विप्राज्जातस्तु मागध्यां गोप्ता कारागृहस्य सः ।

क्षत्रिण्यां वैश्यान्मागधी । लोके 'बन्दीवान्' इत्युच्यते ।

अम्बष्ठायां द्विजाज्जातः पुत्रः कांस्यस्य कर्मकृत् ।
द्विजाद्वैश्यायामम्बष्ठः ।
अन्यत्र तु—
कांस्यपात्राणि चित्राणि रचयेज्जीवनाय सः ।
शूद्रधर्मेण सर्वत्र स्थितिरस्य विधीयते । 'कांसार'इति प्रसिद्धः ।
उग्रायां यो द्विजाज्जातः कुम्भकारः स उच्यते ।
क्षत्राच्छूद्रायामुग्रा ।
अन्यत्र—
स शूद्राद्धीयते धर्मे घटवन्मृण्मयाद् घटात् ।
व्रात्यक्षत्रात्सुतो जातः क्षत्रिण्यां शस्त्रजीविकः ॥
जातिविवेके—
व्रात्यक्षत्रियतः शूद्रयां जातः शूद्रविधानकृत् ।
स कुर्याद्राजपुत्रांश्च शस्त्रास्त्रकुशलान् धनम् ॥
तेभ्यो लब्ध्वात्मवृत्त्यर्थं स्वधर्ममनुपालयेत् ।
राजगुरुरिति प्रसिद्धः ।
तस्मान्मल्लः सुतो जातः क्षात्रिण्यां व्यभिचारतः ।
राज्ञां कौतुकमुत्पाद्य नियुद्धेनार्जयेद्धनम् ॥
वैश्याच्छूद्रयामन्यवध्वां जातो वैतालिकाभिधः ।
जीवनं कामशास्त्रेण स्तुत्या वा भाट्टकर्मणा ॥

क्षत्रात्पारशवात्पुत्रः कीनाटस्ताम्रकुट्टकः ।
विप्राच्छूद्र्यां पारशवी । 'ताम्बेर' इति ख्यातः ।
वणिक्जनात्तु विप्रायां जातोऽन्तःपुरपालकः ॥
अन्तःपुरस्य गोप्ता स राज्ञामुदरपुष्टये ।
सामान्यवनिताः पोष्यास्तासां भाव्याश्च जीविकाः ।
पण्याङ्गनानां संज्ञां च कुर्यात्सङ्गं तदिच्छया ।
रूपाजीवासु तास्वेवं निशि यः सङ्गतो विटः ।
स एव तासां प्राणेशो नाऽन्यः कान्तोऽपि तत्पतिः ॥
शूद्राद्वैश्यायां वणिग्जनः ।
पारशव्यायां च माहिष्यान्मालाकारः स उच्यते ।
सूताज्जातस्तु वैदेह्यां सूपकारः स जायते ॥
ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेह उच्यते ।
आयोगवण्यां तु वैदेहाज्जातो मैत्रेयुको भवेत् ॥
घण्टावादनकृत्प्रातस्तथा मङ्गलगानकृत् ।
शूद्राद्वैश्यायामायोगवी ।
अम्बष्ठायां तु वैदेहात् जातः स्याद्धारिसेखलः ।
आयोगव्यां तु करणात्सैरन्ध्रो गन्धकर्मकृत् ॥
पुष्पचन्दनपण्यादिशृङ्गारैस्तस्य जीविकाः ।
वैश्यात् शूद्रायां करणः ।
उग्रायां वै पारशवाज्जाङ्घिकः पादवेगवान् ।

धावनशीलो वारीति प्रसिद्धः ।

शैवः पाशुपतः कश्चिदारूढः पतितो यदि ।
तस्माज्जातः शूद्रपत्न्यां पुत्रो भस्माङ्कुरः स्मृतः ।
शिवार्चनं तु तत्कार्यं शिवदायेन जीवितम् ॥
स जटाभस्मधारी च शिवलिङ्गं प्रपूजयेत् ।
ताम्बूलमक्षता द्रव्यं गावः क्षेत्राणि शाकिनी ॥
शिवाय प्राणिभिर्दत्तमन्यात्किमपि भक्तितः ।
चण्डीशन्तदिति ख्यातं तेन तस्येह जीविकाः ॥
उग्रायां क्षेमकः क्षत्रात्प्रतीहारः स उच्यते ।

क्षत्राच्छूद्रायामुग्रा ।

कुशीलवः सुतोऽम्बष्ठाद्वैदेह्यां नर्त्तनादिकृत् ।

विप्रायां वैश्याद्वैदेही ।

निर्मण्डलक आभीराज्जातो ऽसौ बाणपिच्छकृत् ।
शराणां करपत्रैश्च रचना तस्य जीविका ॥
उग्रायां मागधाज्जातः कुन्तलः श्मश्रुकर्मकृत् ।
स नापित इति प्रोक्तः क्षौरकर्मविधानकृत् ॥

क्षत्रियाच्छूद्रायामुग्रः क्षत्रियायां वैश्यान्मागधः ।

श्मश्रुकर्त्तनकृच्चैव नखकर्त्तनकोविदः ॥
वृत्त्याऽनया ग्राममध्ये तिष्ठन् वर्णेषु सेवकः ।
नराणां नापितो धूर्त्तः शूद्रेभ्योऽभ्यधिकः स्मृतः ।

मनुः—

शूद्रकन्यासमुत्पन्नो ब्राह्मणो न तु संस्कृतः ।
अपरो नापितः प्रोक्तः शूद्रधर्मोऽधिकोऽपि सः । इति ।

औशनसे नापितशब्दो निरुक्तः । यथा—

सूतके प्रेतके वाऽपि दीक्षाकाले ऽथ वापनम् ।
नाभेरुद्ध्वं तु वपनं तस्मान्नापित उच्यते ।

याज्ञवल्क्यः—

माहिष्येण करण्यां तु रथकारः प्रजायते ।
वर्तयेच्छिल्पवृत्या ऽत्र सर्वस्मिन्शिल्पशास्त्रवित् ।

एतस्योपनयनादि सर्वं कार्यं वचनात् । तदाह—शङ्खः—

क्षत्रियावैश्यानुलोमानन्तरोत्पन्नो यो रथकारस्तस्येज्यादानोपनयनसंस्काराक्रिया अश्वप्रतिष्ठारथसूत्रवास्तुविद्याऽध्ययनवृत्तिता चेति । अत्र मिताक्षरायामेतदुदाहृत्योक्तम् । एवं ब्राह्मणक्षत्रियोत्पन्नमूर्द्धावसिक्तमाहिष्याद्यनुलोमसंकरे जात्यन्तराभाव उपनयनादि प्राप्तिश्च वेदितव्या तयोर्द्विजत्वादिति ।

जातिविवेके—

माहिष्यवनिता सूतं वैदेहाद्यं प्रसूयते ।
स कायस्थ इति प्रोक्तस्तस्य कर्म विधीयते ॥
क्षत्रियाद्वैश्यायां माहिष्या । ब्राह्मण्यां वैश्याद्वैदेहकः ।

लिपीनां देशजातानां लेखनं स समाचरेत् ॥
गणकत्वं विचित्रं च वीजपाटीप्रभेदतः ।
अधमः शूद्रजातिभ्यः पंचसंस्कारवानसौ ॥
चातुर्वर्ण्यस्य सेवा हि लिपिलेखनसाधनम् ।
व्यवसायः शिल्पकर्म तज्जीवनमुदाहृतम् ॥
शिखा यज्ञोपवीतं च वस्त्रमारक्तमम्भसा ।
स्पर्शनं देवतानां च कायस्थाद्यो विवर्जयेत् ॥
जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् ।
देवताराधनं चेति स्त्रीशूद्रपतनानि पट् ॥
मालाकाराच्च शालक्यः करिण्यां मणिरन्ध्रकृत् ।

मणिह्वार इति ख्यातः ।

तस्यैव स्मृत्यन्तरे मंजुरित्यपि संज्ञा ।
कुलाल्यां शाल्मलो मञ्जोर्नागवल्यास्तु विक्रयी ॥
मालाकारात्क्षत्रियायां शिलीन्ध्रो मर्द्दनक्रियः ।
हीनः स शूद्रधर्मेभ्यो जीविका ऽस्याङ्गमर्द्दनम् ॥
शिलीन्ध्रात् क्षत्रियायां च कोल्हाटी नाम जायते।

बहुरूपीति प्रसिद्धः ।

वैदेहाद्रूपकार्यायाः पुत्रश्चान्धसिको भवेत् ।

पाचक इति प्रसिद्धः ।

वैश्यात्करण्यां यो जातो गोचारी वत्सपालकः ।

नाम छागलकं पुत्रं कटधानादजीजनत् ॥
मञ्जुभार्या स वै लोके अजापाल इति स्मृतः ।

जातिविवेके—

हीनः स शूद्रजातिभ्यः छागलान्न वदेच्च सः ।
छागलाभ्यो धनं जातं तज्जीवनमिति स्मृतम् ॥
सैरन्ध्रात् क्षेमको लेभे शय्यापालं तु सेवकम् ।

क्षेमकः प्रतिहारी ।

राज्ञां शय्यासंविधाने कुशलस्तेन जीवति ।
कर्मचाण्डालभार्यायां यो जातः पुष्पशेखरात् ॥
स वै मण्डलको नाम शुनां मण्डलपोषकः ।

कर्मचण्डालो वक्ष्यते ।

युगलं शुनकानां स धर्तुं योज्यो महीभृता ।
वदिनीशूद्रसंयोगाज्जातः स्यन्दोलिकाभिधः ॥
चतुर्वर्णविहीनोऽसौ मंजिष्ठारङ्गकारकः ।
तेन रङ्गेण वासांसि चित्राणि रचयेत्सदा ॥
हस्तलेख्यं बिम्बितं च विद्या तद्रंगसाधनम् ।
स एव सौचिकः ख्यातः कर्त्तरीसूचिकर्तकः ॥
शूद्र्यां निषादः संजज्ञे कुक्कुटं टङ्कशालकः ।
रङ्गशालासु सर्वासु नाटकानां विधायकः ॥
जीवनाद्वा ऽष्टधातूनामन्त्यजैः समतां व्रजेत् ।

मागध्यां क्षत्रियाज्जातो उल्मुको लोहकर्मकृत् ॥

ग्रन्थान्तरे—

स लोहकर्मणा जीवेदुत्तमश्चान्त्यजातितः ।
ब्रह्मक्षत्रियविट्शूद्रवर्णेभ्यो हीन एव सः ॥
उग्रात्पारशवात्पुत्रो मौःकलिस्तैलिको भुवि ।
:रजको वर्णतो हीनः प्रथमश्चान्त्यजेषु च ।
वस्त्रनिर्णेजनं कुर्यादात्मवृत्त्यर्थमेव च ॥
उग्राज्जातं तु वैदेचो(?)मंजूपं रजकं विदुः ।
क्षत्राच्छूद्रायामुग्रः, ब्राह्मण्यां वैश्याद्वैदेही ।
वहेदसौ तैलयन्त्रमुत्तमरत्वन्त्यजातितः ।
जीविकाऽस्य समुद्दिष्टा शुद्धतैलस्य विक्रयात् ।
तिलहिंसायन्त्ररवाकर्णनात्पापसम्भवः
अतो मौःकलिको नित्यं निर्वास्यो नगराद्बहिः ।

तथा च स्मृतिः—

तिलयन्त्रेक्षुयन्त्राणां यावच्छब्दः प्रवर्तते ।
तावत्कर्म न कुर्वीत शूद्रान्त्यपतितस्य च ॥
रथकारस्य वनिता साऽयोगवसमागता ।
सूते यं तनयं सोऽपि सूत्रधार इतीरितः ।
जायाऽऽजीवश्च शैलूपो नाट्यशास्त्रविशारदः ।
जलमण्डपिकादीनि सूत्राणि रचयेत्सदा ॥

वेषविस्मयनृत्यानि वसेत्स नगराद्बहिः ।
कुरविन्दः कुक्कटक्यां सूतात्पट्टांशुकैरतः ॥
असावेवान्त्यजातीनां तं धर्मं तु समाचरेत् ।
वेन्यामावर्त्तकाज्जातः सोऽम्बरसूत्रवायकः ॥

वेन्या नटस्त्री ।

आभीर्यां कुक्कुटापुत्रः सौवीरः कोसटः स्मृतः ।
स कुर्यात्सर्वजातीनां वासांसि त्वात्मवृत्तये ॥
तद्वैपरीत्याद्यो जातो नीलीकर्त्ता स कथ्यते ।
कुन्तलान्मञ्जुभार्यायां संजातो वर्बरः स्मृतः ॥
पुत्रो मैत्राज्जांघिकायां बन्धुलो मालको भुवि ।
कैवर्त्तो पौष्टिकाल्लेभे पांशूलं शणवायकम् ॥
छागलीमृजुकण्ठाच्च औरभ्रं मेषपालकम् ।
आवर्त्तमिंगुभार्यायां क्षेमकादुष्ट्रपालकम् ॥
रौमिकं देशिका मल्लाद्युक्तं लवणकर्माणि ।
आयोगव्यां द्विजाज्जातो धिग्वणः कवचादिकृत् ।
स चर्मणाऽश्वपल्याणं यथाशोभं प्रकल्पयेत् ।

मोची इति प्रसिद्धः ।

जज्ञे कारबोलिका तु बैदेहान्मेदसंज्ञकम् ।
वित्तेच्छया च स वसेदरण्ये वृक्षपर्वते ।

गोहु इति प्रसिद्धः

आयोगवी च कैवर्त्तं जज्ञे पारशवात्सुतम् ।
स हीनः सर्वजातिभ्यो जालं स्वीकृत्य सर्वदा ॥
मत्स्यान् जलचरानन्यान् घातयेदात्मवृत्तये ।
नाव्यं कर्म प्रवहणं नद्यां वर्षासु वाहयेत् ॥
नदीमुत्तारयेल्लोकांस्तेभ्यश्चेच्छेद्धनं तथा ।
विधवायां यतेर्जातः कर्मचण्डाल उच्यते ॥
वापीकूपादिमृत्कर्म्मकर्त्ता वा स्पृश्य एव सः ।
निषादाच्छूद्रपत्न्यां च जातः पुक्कससंज्ञकः ॥
अन्त्यजानां स सदृशो धर्म्मेषु विविधेषु च ।
अरण्यजीवघातेन तद्वृत्तिर्देहपोषणे ॥
श्येनपापर्द्धिका तस्य कथिता सद्भिर्दूषिता ।
धिग्वण्यां तु निषादात् यश्चर्मकारः स तु स्मृतः ॥
स हीनस्त्वंत्यजातिभ्यो जीवनं तस्य चोच्यते।
उपानहौ शिरस्त्राणं कुर्यादश्वस्य पाखरान् ॥
गोचर्मणा महिष्याश्च चर्मणा तस्य जीवनम् ।
आभीरस्त्री लभेद्वेनात्पुत्रं शौण्डिकसंज्ञकम् ॥
तस्य शौष्कल इत्यपि संज्ञा स्मृत्यन्तरे ।
असावधम इत्युक्तः सर्वधर्मवहिष्कृतः
सुरां स कृत्वा विक्रीयात्तेन कुर्याच्च वर्त्तनम् ।
कैवर्त्ती जांधिकाल्लेभे मंगुष्टं रजकं विदुः ।

रजक इति संज्ञामात्रम् । धर्मास्त्वन्यत्रोक्ताः ।

स पाचयेद्वै खटकान् कृत्वा चूर्णं विशेषतः ।
तद्धनं जीविकार्थाय सोऽपि कुर्यान्निरन्तरम् ॥
न स्पर्शस्तस्य कर्तव्यः कदाचिदपि मानवैः ।
धिग्वणा कुंभकारी तु लेभे चित्रकरं भुवि ॥
वर्णबाह्यः स विविधचित्रलेखेन जीवति ।
वैशिकात्कुरुविन्दायां किंशुको लेपकर्मकृत् ॥
असावन्त्यज इत्युक्तो वंशपात्रोपजीविकः ।
कर्मचण्डालकात्पुत्रं वैदेही पाण्डुशोषकम् ।
लेभे बुरुडजातिं तु सदा वंशविदारणम् ॥
जातो निषादाद्वैदेह्यां गारुडो डिंडिमोत्तमः ।
स सप्तानामन्त्यजातीनां सधर्मा सदृशः स्मृतः ॥
धिग्वण्या ऽयोगवात्पुत्रं जज्ञे दुर्लभसंज्ञकम् ।
स कुर्याच्छागलाः सम्यक् दृढाश्च करपत्रिकाः ॥
अन्त्यजातिषु मुख्योसौ कीर्त्तितो जातिसंकरे ।
कैवर्त्ती सौनिकं लेभे पुत्रं चण्डालसङ्गता ॥
स कुर्यादजमेषाणां हिंसां तन्मांसविक्रयी ।

ग्वाटीक इति प्रसिद्धः ।

शौण्डिकी डिंडिमाल्लेभे कीनाशं कीटहारकम् ।
ब्राह्मण्यां शूद्रतो जातश्चाण्डालः प्राङ् निरूपितः ॥

चाण्डालात्पुक्कसी जज्ञे श्वपाकं रात्रिजापके ।
श्वमांसानि पचेन्नित्यं तन्मांसेनैव वर्त्तयेत् ॥
जातो निषाद्यां चाण्डालात् मृताश्वखरहारकः ।
डोंबसंज्ञः श्मशानेषु वसेत्प्रेतोपजीवनः ॥
मेदयोषित्सु शैलन्ध्रैरुत्पन्ना म्लेच्छजातयः ।

मनुः—

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणातिक्रमेण च ॥
पौण्ड्रकाश्चोड्रद्रविडाः कम्बोजा यवनाः शकाः ।
पारदा वाल्हिकाश्चीनाः किराता दारदास्तथा ॥
मुखबाहुरूपज्जाता लोके या जातयो बहिः ।
म्लेच्छवाचो ऽर्यवाचो वा सर्वे ते दस्यवः स्मृताः । इति॥

एवमेतेन ताः संकरजातयस्ते यथायथं ऊहनीयाः । तत्कारणानि तु सामान्यत आह स एव—

व्यभिचारेण वर्णानामवेद्यावेदनेन च ।
स्वकर्मणां च त्यागेन जायते वर्णसंकरः । इति ।

तत्रैतेषां केषांचित्संकराणामप्युत्तमजातिप्राप्तावुत्तमानां चाधमजातिप्राप्तौ निमित्तमाह याज्ञवल्क्यः—

जात्युत्कर्षो युगे ज्ञेयः सप्तमे पंचमेऽपि वा ।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ।

जातीनां मूर्द्धावसिक्तादीनामुत्कर्ष उत्कृष्टब्राह्मणत्वादिव्यक्तिः। सा सप्तमे पंचमे। अपिवा शब्दात्पष्ठे वा युगे जन्मनि बोद्धव्यः। विकल्पव्यवस्था चैवम्—

ब्राह्मणेन क्षत्रियायामुत्पादिता मूर्द्धावसिक्ता सा ब्राह्मणेनोढा दुहितरं कांचिज्जनयाति साऽपि ब्राह्मणेनोढाऽन्यां सो ऽप्यन्येनाऽन्यामिति प्रणालिकया चतुर्थी पञ्चमं ब्राह्मणं प्रसूते। एवं ब्राह्मणेन वैश्यायामुत्पादिता ऽम्बष्ठा साऽपि ब्राह्मणेनोढा कन्यां जनयति साऽप्यन्यामिति क्रमेण षष्ठी सप्तमं ब्राह्मणं जनयतीति पूर्वोक्तधारान्तःपातिनीनां कन्यानां पूर्वपूर्वाभ्यो यथोत्तरं श्रेष्ठत्वम। तथाऽन्येष्वप्यूहनीयम्। तथा—कर्मणां वृत्त्यर्थानां व्यत्यये विपर्यासे पञ्चमे षष्ठे सप्तमे वा जन्मनि यस्य नीचस्य वृत्त्या जीवति तत्सम एव भवति। तथा हि——

ब्राह्मणक्षत्रियविशां मुख्यया वृत्या जीवनासंभवे स्वस्वावरवृत्तिरापद्यनुकल्पो विहितस्तथा आपद्विमोक्षेऽपि ब्राह्मणःक्षत्रियवृत्तिमपरित्यज्य पुत्रं जनयति तामेवोपजीवंस्तादृशीमेव पुत्रपरम्परां जनयति तदा षष्ठः सप्तमं क्षत्रियमेव प्रसूते। वैश्यवृत्त्या ऽनुजीवन्पुत्रसन्ततौ पञ्चमः षष्ठं वैश्यम्। शूद्रवृत्त्या चतुर्थः पंचमं

शूद्रमिति । एवं क्षत्रियोऽपि वैश्यवृत्त्या जीवन् षष्ठं वैश्यम्, शूद्रवृत्त्या पंचमं शूद्रमिति । कर्मणां व्यत्ययो जन्मवत् द्विविधः । अनुलोमः प्रतिलोमश्च । नीचानामुच्चकर्मानुष्ठानं उच्चानां च नीचकर्मानुष्ठानमिति । तत्र अधरोत्तरं भावपरो निर्देशः । अधरत्वमुत्तरत्वं च पूर्ववज्जन्मवद्वेदितव्यम । यथा ब्राह्मणः शूद्रवृत्तिः श्रेयान्, शूद्रस्तु द्विजवृत्तिरधम इति ।

एतदाह वशिष्ठः—अजीवन्तः स्वधर्म्मेणाऽनन्तरां पापीयसीं वृत्तिमातिष्ठेरन्न तु कदाचिज्ज्यायसीमिति ।

मिताक्षराकारस्त्वन्यथा व्याचष्टे—त्रिविधः संकरः वर्णसंकरः संकीर्णसंकरः वर्णसंकीर्णसंकरश्चेति । तत्र मुख्यवर्णयोरेव दाम्पत्यं वर्णसंकरः ।

स चोक्तो 'माहिष्येण करण्यां तु रथकारः प्रजायते' इत्यादिना । स चाऽनुलोमप्रतिलोमभेदात् द्वादशधोक्तः । उभयोः संकीर्णयोरेव दाम्पत्यं संकीर्णसंकरः । सचोक्तो 'माहिष्येण करण्यां तु रथकारः प्रजायते' इत्यादिना । यत्र पुनरेको वर्णः अपरः संकीर्णः तयोर्दाम्पत्यं वर्णसंकीर्णसंकरः । सोऽप्यनुलोमप्रतिलोमभेदात् द्विधा यथा मूर्द्धावसिक्तायां क्षत्रियविट्शूद्रैरुत्पादिताः, अम्बष्ठायां वैश्यशूद्राभ्यां निषाद्यां शूद्रेणोत्पादि-

ता अधराः प्रतिलोमजाः । तथा मूर्द्धावसिक्ताम्बष्ठानिषादीषु ब्राह्मणेनोत्पादिता माहिष्योग्रयोः ब्राह्मणक्षात्रियाभ्यां करण्यां ब्राह्मणक्षत्रियविड्भिरुत्पादिता उत्तरे अनुलोमजाः । एतदधरोत्तरं पूर्ववत्सदसदिति पूर्वेण वाक्यभेदात्सम्बध्यत इति तदेवं निरूपिताः सप्रपञ्चाश्चत्वारो वर्णाः ।

शिष्टानामवधिर्गुणैकजलधिः सत्संपदां शेवधिः
श्रीमत्केशवदासतः समजनि श्रीमान्पिलाजीनृपः ।
तस्यैतस्य कृते कृतेऽत्र कृतिना कृष्णेन शेषेण स-
च्छूद्राचारशिरोमणावयमभूज्जातेर्विवेकोऽग्रिमः ॥ १ ॥

इति श्रीशेषकृष्णविरचिते शूद्राचार-
शिरोमणौ जातिविवेकः ।
प्रथमः परिच्छेदः ।



# द्वितीयः परिच्छेदः ।

अथ शूद्रकर्म्मवृत्तयः । तत्र पराशरः ।

शूद्रस्य द्विजशुश्रूषा परमो धर्म उच्यते ।
यदन्यत् कुरुते कर्म्म तद्भवेत्तस्य निष्फलम् ।

तच्छुश्रूषायाः परमनिःश्रेयसहेतुत्वात् । तथा च मनुः—

विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम् ।
शुश्रूषैव तु शूद्रस्य धर्मो निःश्रेयकारणम् ॥

अत्र परं इत्यभिधानात् क्षत्रिय वैश्ययोरपि शुश्रूषा शूद्रस्य धर्मः । तथा च स एव—

शुचिरुत्कृष्टशुश्रूषुर्मृदुवागनहंकृतः ।
ब्राह्मणाद्याश्रयो नित्यमुत्कृष्टां गतिमश्नुते ।

उत्कृष्टौ क्षत्रियवैश्यौ । ब्राह्मणाद्याश्रय इति । वृत्त्यर्थं क्षत्रियादिशुश्रूषापरोऽपि ब्राह्मणे निवेदितात्मा । क्वचित्तु उत्कृष्टिं जातितोऽश्नुते इति पाठः ।

भारत—

दूराच्छूद्रेणोपचार्यो ब्राह्मणोऽग्निरिव ज्वलन् ।
संस्पृश्य परिचर्यस्तु वैश्येन क्षत्रियेण वा । इति ॥

गौतमः--शुद्रश्चतुर्थो वर्ण एकजातिस्तस्यापि सत्यमक्रोधः शौचमाचमनार्थं पाणिपादप्रक्षालनमेवैके । श्राद्धकर्म भृत्यभरणं स्वदारवृत्तिः परिचर्या चोत्तरषां तेभ्यो वृत्तिं लिप्सेत जीर्णानुपानहः छत्रवासः कूर्चादीनि उच्छिष्टाशनं शिल्पवृत्तिश्चयं वाऽपर्याश्रयद्भर्त्तव्यस्तेन (?) क्षीणोपि तेन चोत्तारस्तदर्थोस्य निश्चयः स्यादनुज्ञातोऽस्य नमस्कारो मन्त्रः पाकयज्ञैः स्वयं यजेतेत्येके इति । एकजातिः उपनयनरूपद्वितीयजन्माऽभावात् एकं जन्म । आचमनार्थं इत्यादि । करचरणप्रक्षालनमेवाऽचमनार्थं इत्येकेषां मतम् । अन्ये तु सकृदुदकपानमिछन्तीति । भृत्यभरणं पोष्याणां भरणम् । स्वदारवृत्तिः । स्वेष्टेषु दारेषु वृत्तिः । केचित्तु स्वदारवृत्तिरेवास्य भवति नाश्रयान्तरप्राप्तिरित्याहुः । उत्तरेषां ब्राह्मणादीनां त्रयाणां तेभ्यः परिचरितेभ्यः वृत्तिर्जीवनम् । जीर्णानि उपभुक्तानि । पूर्वैः परिचरिते देयानि । कूर्चं तृणमयमासनम् । उच्छिष्टाशनं भोजनपात्रे यद्भुक्तशेषं तदस्याशनम् । एतच्चादासविषयम् । यत्तु नाब्राह्मणायोच्छिष्टं प्रयच्छेदित्येतददासविषयं गृहस्थशूद्रविषयमित्यन्ये ।

उच्छिष्टमन्नं दातव्यं शूद्राय गृहमेधिने ।

गृहस्थाय तु दातव्यमनुच्छिष्टं दिने दिने ।
इति व्याघ्रवचनात् ।

मनुः—

उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च ।
पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः ।

एतद्व्याख्यन्मेधातिथिः—उच्छिष्टं नामातिथ्यादिभुक्तावशिष्टं भाण्डस्थितं शूद्रायाश्रिताय देयम् । न भोजनपात्रावशिष्टमिति । पुलाकाः असारधान्यानि । परिच्छदाः शयनासनादीनि । भर्त्तव्यस्तेन क्षीणोऽपि परिचर्यया भजमानः शूद्रो यदि क्षीणः कर्म्म कर्त्तुमसमर्थः तथापि यमसौ पूर्वं श्रितस्तेन भर्त्तव्य इत्यर्थः । तदाह मनुः—

प्रकल्प्यतेस्य तैर्वृत्तिः स्वकुटुम्बाद्यर्थादतः ? ।
शक्तिं चापेक्ष्य दाक्ष्यं च भृत्यानां च परिग्रहम् ।

स्वकुटुम्बादिति । पुत्रवदसौ पालनीयः इत्यर्थः । इति मेधातिथिः । भृत्यानामिति किं यतोस्य भर्तव्या इति विचारः कार्य इत्यर्थः । तेन चोत्तरः । तेन शूद्रेण उत्तर आर्यः क्षीणोऽपि वृत्तिहीनः शिल्पादिनोपार्जितेन धनेन भर्त्तव्यः । तदर्थः उत्तरपोषणार्थः । अस्य शूद्रस्य निचयो धनसंचयः । अत्रार्यस्य नीचाश्रयणे नी-

चकर्त्तव्यतामाह जातूकर्ण्यः—

योनीचमाश्रयेदार्य आत्मानं दर्शयन्तदा ।
आत्मानं दासवन्मत्वा चरेन्नीचोऽपि तं प्रति ।
दरिद्रो ब्राह्मणो दक्षो वेदानां चैव पारगः ।
शूद्रेणापि सदाप्येष भर्त्तव्यो नाश्रितोऽपि सन् ॥

अनुज्ञातोऽस्य नमस्कारो मन्त्रः । अस्य शूद्रस्य वैश्वदेवादिषु तत्तद्देवतापदं चतुर्थ्यन्तमुच्चार्य नम इत्येवंरूपो धर्मज्ञैरनुज्ञात इत्यर्थः । पाकयज्ञैरित्यादि पाकयज्ञाः पञ्च महायज्ञाः । ब्रह्मयज्ञस्य पाकानिष्पाद्यत्वेऽपि साहचर्यात्तथा व्यपदेशः । यद्वा पाकशब्दः प्रशस्तवाची प्रशस्ता यज्ञा इत्यर्थः । ते चोक्ता एव । स्वयमित्यादि । पत्नीपुत्रादिना पाकयज्ञान्न कारयेदित्येके मन्यन्त इत्यर्थः । एवं ब्राह्मणादेस्त्वन्येनापि पाकयज्ञादि कारयतो न दोष इति गम्यते । ननु पाकयज्ञादीनामग्निसाध्यत्वादनग्नेः शूद्रस्य कथं तत्राधिकारः ?

स्मार्त्तकर्म विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।
दायकालाहृते चापि तदभावे द्विजोऽप्सु च ॥ इति ।

योगिवचनात् ।

नचास्य विवाहाग्निरस्ति, मन्त्रेण तु होम इति

गोभिलेन विवाहहोमस्य मन्त्रसाध्यत्वाभिधानात् । शूद्रस्य मन्त्ररहितत्वेन होमस्यापि निवृत्तेः । नमस्कारमन्त्रस्तु शृङ्ग्राहिकया पञ्चयज्ञादिविशेष एवोपदिष्ट इति न तेन वैवाहिकहोमसिद्धिः । अत्राहुः—स्मार्त्तंकर्म्मेत्यादिवचनानां त्रैवर्णिकोपक्रमेण पाठान्तरत्वाच्छूद्रस्य पाकयज्ञानां साक्षाच्छ्रुतत्वाल्लौकिकाग्नावेव ते भविष्यन्तीति । अन्ततस्त्रैवर्णिकानामपि विवाहाग्निर्न नियतः किं पुनः शूद्रस्येति । एवमेवापरार्कमेधातिथिप्रभृतयः प्रतिपन्ना इति । अन्ये तु त्रैवर्णिकानां स्मार्त्ताग्न्यभावे जलादेरुपदिष्टत्वात्तद्वदेव शूद्रस्यापि जले एव वैश्वदेवादि भविष्यतीत्याहुः । स्कान्दे प्रभासखण्डे:—

न दर्भानुद्धरेच्छूद्रो न पिबेत्कापिलं पयः ।
मध्यपत्रे न भुञ्जीत प्रजवृक्षस्य भामिनी ॥
नोच्चरेत्प्रणवं मन्त्रं पुरोडाशं न भक्षयेत् ।
न शिखां नोपवीतं च नोद्धरेत्संस्कृतां गिरम् ॥
न पठेद्वेदवचनं त्रिपवं नहि सेवयेत् ।
नमस्कारेण मन्त्रेण क्रियासिद्धिर्भवेद्ध्रुवम् ॥
निषिद्धाचरणं कुर्वन् पितृभिः सह मज्जति ।
न शिखेति-एतदपकृष्टशूद्रपरम् ॥

सच्छूद्रेऽप्येतदनुजानाति वशिष्ठः —

एतेषां परिचर्या शूद्रस्य नियता वृत्तिरनियताः केशवेषाः सर्वेषां चामुक्ताशिखावर्जमिति । सर्वमुण्डनं शिखातिरिक्तकेशमुण्डनं वेति वाशब्दार्थः । तच्च सदसद्विषयतया व्यवस्थाप्यम् । स्मृतिकौमुद्यां वैतदन्यथा व्याख्यातम्—शूद्रस्य पाक्षिकप्राप्तं शिखाया बंधनं कर्मकालव्यतिरिक्तस्थलेऽपि वैकल्पिकमिति दर्शयिष्यन् प्रसङ्गाद् ब्राह्मणादीनामपि दर्शयति सर्वेषां वेत्यादि । सर्वेषां ब्राह्मणादीनां चतुर्णामपि वर्णानां वा विकल्पेन मुक्तशिखावर्जं स्थितिर्भवति । कर्मकाले मुक्तशिखत्वं सर्वदा प्रतिषिद्धम् । अतोऽकर्मकाले मुक्तशिखत्वं विकल्पेन निषिध्यते इति । तथाच मनुः—

शूद्राणां मासिकं कार्यं वपनं न्यायवर्तिनाम् ।
वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टं च भोजनम् ॥

मासिकं वपनं मासि मासि वपनं कार्यमित्यर्थः । न्यायवर्तिनाम् द्विजशुश्रूषापञ्चमहायज्ञानुष्ठातॄणाम् । शौचकल्पः सूतकादावाचमेन च कल्पः प्रकारो वैश्यवज्ज्ञेयः । पंचदशाहमाशौचमित्यर्थः आचमनं च गण्डूषत्रयपानं सच्छूद्रस्य ।

ननु शुध्येरंस्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्तत इति विहितं सकृत्कालस्पर्शनमात्रमित्यर्थः । उपवीतमप्यस्य

नास्ति तस्योपवीताविषयत्वात् । अतएव बौधायनः—

शूद्राणामार्याधिष्ठितानां मासि मासि वपनमार्यवदाचमनकल्पः । उपवीतं वस्त्रविन्यासादीति । आर्याधिष्ठितानां ब्राह्मणादिसेविनाम् । आर्यवत् वैश्यवत् ।

मनुः—

शूद्रस्तु वृत्तिमाकांक्षन् क्षत्रमाराधयेद्यदि ।
धनिनं वाप्युपाराध्य वैश्यं शूद्रो जिजीविषेत् ।
स्वर्गार्थमुभयार्थं च ब्राह्मणानेवाराधयेत् ।
जातब्राह्मणशब्दो हि साप्यस्य कृतकृत्यता ।

स्वर्गार्थं स्वर्गप्राप्त्यर्थं उभयार्थं स्वर्गवृत्तिलिप्सया राधयेत् । आराधयत् । जातब्राह्मणशब्दोब्राह्मणशुश्रूषा परमो धर्मः तत्रापि विप्राज्जीवनोपादाने स्वर्गार्थत्वं जीवनार्थत्वं चेति विप्रशुश्रूषाया उभयार्थत्वम् । तदनुपादाने स्वर्गार्थत्वमेव । क्षत्रियवैश्यशुश्रूषया जीवनाभाव कर्तव्यमापद्धर्ममाह याज्ञवल्क्यः—

शूद्रस्य द्विजशुश्रूषा तयाऽऽजीवन्वणिग्भवेत् ।
शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन् ।

मनुः—

अशक्नुवंस्तु शुश्रूषां शूद्रः कर्म द्विजन्मनाम् ।
पुत्रदाशत्ययं प्राप्तो जीवेत्कारुककर्मभिः ।

अत्ययं क्षयम् ।

यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः । तानि कारुककर्म्माणि शिल्पानि विविधानि च ।

कारुककर्माणि तक्षणच्छेदनादीनि । शिल्पानि पत्रच्छेदरूपलेख्यादीनि । देवलः—

शूद्रधर्मास्त्रिवर्णशुश्रूषा कलत्रादिपोषणं कर्षणपशुपालनभारोद्वहनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुवीणामुरजमृदङ्गवादनानीति ।

पराशरः—

लवणं मधु मद्यं च तक्रं दधि घृतं पयः ।
न दुष्येच्छूद्रजातीनां कुर्यात्सर्वेषु विक्रयम् ।

यथा—

विक्रीणन्मद्यमांसानि अभक्ष्यस्य च भक्षणम् ।
कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात् ।

इति लघुपराशरवचनम् यदपि,

विक्रयं सर्ववस्तूनां कुर्वञ्छूद्रो न दोषभाक् । मधु चर्म सुरां लाक्षां मुक्त्का मांसं च पञ्चमम् । इति मद्यादिनिषेधकं कालिकापुराणवचनं, तदनापदि ज्ञेयम् । अत्रायं निगर्वः । द्विजशुश्रुषया जीवनं मुख्यं वृत्तिः । तत्राशक्तो वाणिज्यया मधुमद्यचर्म्मलाक्षामांसानि हित्वा-

विक्रीणीत शिल्पादिभिर्वा जीवेत् । अत्यन्तापदि तु मधुमद्यादिविक्रयोऽप्यभ्यनुज्ञायते। तथैवोशनसापि क्रमो निबद्धः ।

शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि वाऽप्यथ ।
विक्रयः सर्वपण्यानां शूद्रधर्म उदाहृतः । इति ।

नरसिंह पुराणे—

अयाचितप्रदाता स्यात्कृषिं वृत्त्यर्थमाश्रयेत् ।
पुराणं शृणुयान्नित्यं नरसिंहस्य पूजनम् । इति ।

पराशरः—

कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत् । इति ।

वेदाक्षराणां विचारो ज्ञानम। चरतेर्गत्यर्थत्वाद्ये गत्यर्थास्ते ज्ञानार्था इति न्यायाच्च । ज्ञानं श्रवणेनाध्ययनेन तदर्थचिन्तनेन भवतीति तत्त्रयं प्रतिपिध्यते । तथा चापशूद्राधिकारे व्याससूत्रम्—"श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्चेति" (१।३।३८)। व्याख्यातं चैतच्छाङ्करभाष्ये— इतश्च न शूद्राधिकारः यदस्य स्मृतितः श्रवणाध्ययनार्थप्रतिषेधो भवति । वेदश्रवणप्रतिषेधो वेदाध्ययनप्रतिषेधो वेदार्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते । श्रवणप्रतिषेधस्तावत् शूद्राधिकारे गौतमः—

"अथ हास्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां श्रोत्रपूरणं पद्युवा एतत् श्मशानं यच्छूद्र" इति। भवति चोदाहरणे जिह्वाच्छेदो[धा]रणे शरीरभेद इति। अस्य शूद्रस्य उपसृत्य बुद्धिपूर्वं श्रृण्वतः। तेन ध्वनिमात्रश्रवणेन दोष इति केचित्। त्रपु रंगम्, जतुर्लाक्षा पद्युवा मूर्त्तिमदेतत् श्मशानमेव यच्छूद्र इत्यर्थः। उदाहरणे धारणे शब्दतोऽर्थतश्चानुसन्धानरूपे बोधे। एतेन वेदार्थविचारात्मकं यच्च यावच्च तत्सर्वं प्रातिषिध्यते। तत्र कर्म्मब्रह्ममीमांसाद्वये वेदवाक्यानि पूर्वोत्तरपक्षरीत्या स्पष्टमेव विचार्यन्ते। न्यायशास्त्रेपि "द्वे ब्रह्मणी वेदितव्ये परं चापरं च"। "द्वा सुपर्णा सयुजा सखाये"त्यादिश्रुत्यवगत "एकमेवाद्वितीयं ब्रह्मे"त्यादि श्रुत्यर्थपरिपंथितयावभासमान आत्मभेद एव विचिन्त्यते। षोडशपदार्थनिरूपणं तु तस्यैव परिकरम्। तदेतन्मननशास्त्रमित्याचक्षते परीक्षकाः। यदाहुरुदयनाचार्याः—

न्यायचर्च्चेयमीशस्य मननव्यपदेशभाक्।
उपासनैव क्रियते श्रवणानन्तरागता। इति।

अतएव वेदाङ्गाध्ययनमपि निषिध्यते। तेषामपि तदर्थावधारणफलकत्वात्। एवं हि तान्यङ्गानि भवन्ति। अपि च, स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिरेवार्थाव-

धारणपर्यन्तमध्ययनं विदधानस्तद्धेतुतयाङ्गान्यध्यापयति। तथा च शूद्रं प्रति वेदाध्ययनरूपस्योपेयस्यैव बाधे तदुपयोग्यङ्गाध्ययनमपि स्वत एव निवर्त्तते। अत एव कूर्म्मपुराणम्—

वेदं वेदौ तथा वेदान्सांगांश्च चतुरो द्विजः ॥
अधीत्य चाधिगम्यार्थं ततः स्नायी द्विजोत्तमः। इति।

यच्च व्याकरणमार्षं पाणिनीयादि, तत्स्मृतित्वाद्वेदाङ्गत्वाद्वा प्रतिषिध्यते। यच्च वैदिकं तत्तु नित्यमेवाप्राप्तं वेदानुपकारकत्वेन तत्र विधेरभावात्। स्यादेतत्। "साधुभिर्भाषेत न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द" इति। विधिनिन्दार्थवादैः साधुप्रयोगे विहिते तद्विवेकोपायतया विहितं व्याकरणं शूद्रमप्यधिकरिष्यतीति। तच्च वार्त्तम् "पर्वाणस्तर्वाणो नाम ऋषयो बभूवुस्ते यद्वानस्तद्वान इति प्रयोक्तव्ये पर्वाण स्तर्वाण इति प्रयुञ्जते। याज्ञे पुनः कर्मणि नापभाषन्ते" इति महाभाष्यकारवचनात् "स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधा"दिति श्रुतेश्च यज्ञकर्म्मणोऽन्यत्रापभाषणे दोषोऽभावात्।

अथ 'नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापये'दिति स्मृतेरस्ति तस्यापि याज्ञं कर्मेति तत्र साधु भाषणमपे-

क्षितमिति चेत् ? नेति ब्रूमः ।

न दर्भानुद्धरेच्छूद्रो न पिबेत्कापिलं पयः ।
मध्यपत्रे न भुञ्जीत ब्रह्मवृक्षस्य भामिनि ।
नोच्चरेत्प्रवणवं मन्त्रं पुरोडाशं न भक्षयेत् ।
न शिखां नोपवीतं च नोच्चरेत्संस्कृतां गिरम् ।
न पठेद्वेदवचनं त्रिषवं नहि सेवयेत् ।
नमस्कारेण मन्त्रेण क्रियासिद्धिर्भवेत् ध्रुवम् ।

निषिद्धाचरणं कुर्वन्पितृभिः सह मज्जतीति स्कान्दे प्रभासखण्डे शूद्रस्यापि विशेषेण संस्कृतशब्दोच्चारणप्रतिषेधात् । एवं च नापभाषेतेति निषेधः स्त्रीशूद्रेतरविषयः । अत एव वैदिकस्य व्याकरणस्य संस्कृतशब्दात्मकत्वात्सिद्धमनध्येयत्वम् । स्मृत्यध्ययनमपि निषिद्धं मनुना—

निषेकादिःश्मशानांतो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रोऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्य चित् ।

अस्मिन् स्मृतिशास्त्रे । तथाश्रवणेऽप्यनधिकार उक्तो भविष्यत्पुराणे—

श्रूयतां धर्मशास्त्राणि मनुर्विष्णुर्यमोऽङ्गिराः ।

इत्यादिना स्मृतिपरिगणनानन्तरं,

एतानि धर्मशास्त्राणि श्रुत्वा ज्ञात्वा च भारत ।

वृन्दारकपुरं गत्वा मोदन्ते नात्र संशयः। इति। सुमन्तु-
वचनानन्तरं शतानीक उवाच--

यान्येतानि त्वयोक्तानि धर्मशास्त्राणि सुव्रत।
नेच्छामि श्रोतुं विप्रेन्द्र गुह्यान्येतानि हि द्विज।
त्रयाणामेव वर्णानां प्रोक्तान्येतानि पण्डितैः।
श्रेयसे न तु शूद्राणामत्र मे वचनं शृणु।
ब्राह्मणादिषु वर्णेषु सर्वे वेदाः प्रतिष्ठिताः।
मन्वादीनि च शास्त्राणि तथांगानि समन्ततः। इति।
तथा च पुराणश्रवणाध्ययने अपि निषिद्धे।
पुराणं पञ्चमो वेदः पुराणं वेदसंमितमिति वचनात्।

तथा च कूर्मपुराणे पुराणान्याधिकृत्य--

अध्येतव्यमिदं नित्यं विप्रैः पर्वणि पर्वणि।
नाध्येतव्यमिदं शास्त्रं वृषलस्य च सन्निधौ।
योऽधीते चैव मोहात्मा स याति नरकान् बहून्।

भविष्ये--

मोहाद्वा कामतः शूद्रः पुराणं संहितां स्मृतिम्।
पठन्नरकमाप्नोति पितृभिः सह कुट्टनम्॥

कुट्टनमिति नरकनाम। तथा--

यस्य राज्ये सदा शूद्राः पुराणं संहितां तथा।
पठन्ति स्यात्सचाल्पायू राजा राष्ट्रेण सान्वयः।

तथा—

पुराणं धर्मशास्त्राणि संहिताश्च मुनीरिताः ।
नाध्यापयेन्नृपः शूद्रैर्विहितानि यदृच्छया । इति ।

वायवीयसंहितायां—

नावेदविद्भ्यः कथनीयमेतत्पुराणरत्नं पुरुशासनस्य ।
नाभक्तशिष्याय न नास्तिकाय दत्तं हि तद्यन्निरयं प्रयाति ।

ननु पुराणश्रवणेऽधिकारः स्मर्यते । भविष्ये—

शूद्राश्च मे भृशं दीनाः प्रतिभान्ति समाग्रतः ।
आगमेन विहीनास्तु अहो कष्टतरं मम ।
कश्चैषामागमः प्रोक्तः पुरा द्विज मनीषिभिरिति ।

शतानीकप्रश्नानन्तरं सुमन्तुः—

साधु साधु महाबाहो श्रूयतां परमं वचः ।
चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे ।
धर्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम ।
विशेषतस्तु शूद्राणां पावनानि मनीषिभिः ।
अष्टादश पुराणानि चरितं राघवस्य च ।
रामस्य कुरुशार्दूल सर्वकामार्थसिद्धये ।

तथा च पुराणान्यधिकृत्य—

एतानि कुरुशार्दूल धर्मशास्त्राणि पण्डितैः ।
साधारणानि प्रोक्तानि वर्णानां श्रेयसे सदा ।

चतुर्णामिह राजेन्द्र श्रोतुमर्हाणि सुव्रत ।
अस्ति शूद्रस्य शुश्रूषा पुराणे नैव वेदनम् ।
वदन्ति केचिद्विद्वान्सः स्त्रीणां शूद्रसमानताम ।

तथा—

सिद्धान्तश्रवणं प्राहुर्द्विजानां मुनिसत्तम ।
शूद्राणां च विरक्तानां तथा रक्षाणां महामुने ।
सिद्धान्तश्रवणं प्रोक्तं पुराणश्रवणं बुधैः । इति ।

भागवतेऽपि—

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।

इति भागवताख्यानं कृपया मुनिना कृतमित्यादीन्यन्यान्यप्यूह्यानि । सत्यम् । श्रवणनिषेधवाक्यपर्यालोचनया शूद्रस्य प्राधान्येन श्रवणं श्रावणं च निषिध्यते । श्रवणविधयश्च पुराणश्रवणायोपविष्टेषु द्विजेषु तत् शुश्रूषाप्रसङ्गागतेन शूद्रेण श्रोतव्यं न तु प्राधान्येनेत्येवाशयः । अत एव भविष्ये श्रवणप्रकार उक्तः ।

देवार्चाः पुरतः कृत्वा ब्राह्मणांश्च नृपोत्तम ।
श्रोतव्यमेव शूद्रेण तथान्यैश्च द्विजातिभिः ।
श्रौतं स्मार्त्तं हि वै धर्म्मं प्रोक्तमस्मिन्नृपोत्तम ।
तस्माच्छूद्रैर्विना विप्र न श्रोतव्यं कदाचन ॥ इति ।

अर्चां प्रतिमां पुरतः कृत्वा प्रधानतया श्रवणे

पुरस्कृत्य । तत्सेवानुषङ्गेण स्वयमपि श्रवणात् । नतु स्वातन्त्र्येण । तदिदमुक्तम् । विना विप्रं पुराणादि न श्रोतव्यं कदाचनेति । विप्रं श्रोतृत्वेन पुरस्कृत्येत्यर्थः । श्रावयितुरप्येषैव गतिः ।

नाध्येतव्यमिदं शास्त्रं वृषलस्य च सन्निधौ । इति । निषेधे तत्सन्निधौ तमुद्दिश्येत्यर्थात् । अन्ये तु अतिक्रान्तानिषेधेन पुराणे श्राव्यमाणे श्रावयितैव प्रत्यवैति न शूद्र इत्याहुः । एवं श्रवणमेवानुज्ञातं न त्वध्ययनमपि । अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना ।

श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन । इति भविष्ये तन्निषेधात् । यत्तु वायुपुराणे सूतः—

न हि वेदेष्वधीकारः कश्चिच्छूद्रस्य विद्यते ।
पुराणेष्वधिकारो मे दर्शितो ब्राह्मणैरिह ।

तत्र शूद्राधिकारप्रतिपादकम् । सूतस्य संकरजातित्वेन शूद्रत्वात् । ब्राह्मण्यां क्षत्रियात्सूत इति योगिवचनात् । यद्वा ब्राह्मणद्वारा तदुपसर्जनत्वेनाधिकार इति व्याख्येयम् । अत्राध्ययनाभावेऽप्यानुषंगिकभूतपुराणात् श्रुतिस्मृत्यादिनिपुणद्विजमुखोपदेशाद्वा धर्मानवगत्य शूद्रोऽनुतिष्ठेत् । "नमस्कारेण मन्त्रेण पंच यज्ञान्न हापयेत्" इति लिङ्गात् । नमस्कारेणेति देवेभ्यो नमः पितृभ्यो

नमः इति नमस्कारान्तो नाममन्त्र एव मन्त्रः। नम इत्येव वा सर्वकर्मसु शूद्रेण पठनीयः, न वैदिकः स्मार्त्तः पौराणो वा। गौतमोऽपि। "अनुमतोऽस्य नमस्कारो मंत्रः" इति। स्मृतिकौमुद्यां तु—अनुशासनपर्वणीत्युपक्रम्योदाहृतम्—

स्वाहाकारनमस्कारौ मन्त्रः शूद्रे विधीयते।
ताभ्यां शूद्रः पाकयज्ञैर्यजेत ब्रह्मवान् स्वयम्॥

स्वाहाकारो नमस्कारो वेति कल्पितावेतौ मन्त्रौ समुचितौ। ताभ्यां स्वाहाकारनमस्काराभ्यां ब्रह्मवान् ब्रह्म मन्त्रः तद्वान् पाकयज्ञैः स्वयं यजेतेत्यर्थः। तत्र स्वाहाकारमन्त्रः शूद्रे लोकविद्विष्टत्वात् आचारविरोधाच्च न भवतीत्याहुः। अत्राह गौडः— मन्त्रपाठस्य द्वयं कृत्यम्। अदृष्टसिद्धिः। अनुष्ठेयार्थप्रकाशनरूपदृष्टसिद्धिश्च। तत्र सामान्यप्राप्तनमस्काररूपमन्त्रोच्चारणेनादृष्टं तावत्सिद्धम्। अनुष्ठेयार्थप्रकाशनार्थं तु ब्राह्मणद्वारा मन्त्रं पाठयेत। यद्यपि शूद्रं प्रति श्रवणं श्रावणं च निषिद्धं तथापि विशेषवचनान्न तन्निषिध्यते। तथा चैकोद्दिष्टमभिधाय वराहपुराणे—

अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः।
अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते। इति वच-

नात् । मन्त्रेण गृह्यते सम्बध्यते पाठकत्वेनेत्यर्थः । अमन्त्रस्येति विशेषणोपादानं यावदमन्त्रव्याप्त्यर्थम् । तेन स्त्रियापि क्रियमाणे कर्माणि ब्राह्मणो मन्त्रं पठेत् । तुल्यन्यायत्वात् । तस्य चार्थप्रकाशनरूपदृष्टस्यानुक्रमध्यानादितोऽपि सम्भवे ब्राह्मणद्वारकमन्त्रपाठोऽपि नावश्यकः । तस्य दृष्टमात्रप्रयोजनकत्वात् । अमन्त्रस्य च शूद्रस्येति चेयं परिभाषा । न च परिभाषा प्रकरणेन नियम्यते। तेनैकोद्दिष्टादन्यत्रापि स्नानदानादौ विप्रेण मन्त्रः पठितव्यः । अत एव पित्र्ये तु द्विगुणा दर्भा इति कात्यायनोक्तवचनं श्राद्धप्रकरणपठितमपि परिभाषात्वात् पितृक्षयमात्रपरमिति वृद्धाः । मदनपालस्तदन्यथा व्याचष्टे—यत्र शाखाविशेषे श्राद्धे क्षणदानाद्यनन्तरं निमन्त्रितब्राह्मणस्य मन्त्रपाठो विहितः तत्र शूद्रकर्तृकश्राद्धेपि निमन्त्रितेन मन्त्रपाठः कार्य इत्येष 'विप्रो मन्त्रेण गृह्यते' इत्यस्यार्थ इति। कल्पतरुकारस्तु शूद्राणां वैदिक मन्त्र एवानाधिकारो न पौराणेष्वपि। तेन पौराणधर्म्माणां स्त्रीशूद्रान् प्रति विशेष्य विधानात्तेषां च मन्त्राविशिष्टतयैवोत्पन्नत्वादगत्या कर्माङ्गभूतपौराणमन्त्रपाठोऽप्यस्तीत्याह । तथैव मध्यदेशाचार इति। अत्र शूद्राणां ये धर्माः साक्षान्निषिद्धास्ते निवर्त्तन्ते ।

साक्षाद्विहितास्ते प्रवर्तन्ते । ये च न विहिता न च प्रतिषिद्धाः साधारणास्तेऽपि भवन्ति । किन्त्वमन्त्रकमेव । श्रौतस्मार्ताश्च केचिदमन्त्रका अपि निषिध्यन्ते। मोक्षधर्मे व्यासः—

ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः ।
अत्र तेषामधीकारो धर्मेषु द्विपदां वर ॥

अत्र श्रौते याजनादौ स्मार्ते संध्यावन्दनादौ । यज्ञादिषु तु विशेषवचनादधिकार इति वक्ष्यते । स्वस्वधर्माभिरतानां फलमुक्तं कूर्मपुराणे—

प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ।
स्थानमैन्द्रं क्षात्रियाणां संग्रामेष्वपलायिनाम् ॥
वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्त्तिनाम् ।
गान्धर्वं शूद्रजातीनां परिचर्यानुवर्तिनाम् ।

महाभारते—

यश्च त्रयाणां वर्णानामिच्छेदाश्रमसेवनम् ।
कर्तुमाश्रमनिर्दिष्टान्धर्मांस्तान् शृणु पाण्डव ॥
शुश्रूषा कृतकृत्यस्य कृतसन्तानकर्मणः ।
अभ्यनुज्ञाप्य राजानं शूद्रस्य जगतीपते ॥
स्वधर्मानुगतस्यापि देशधर्मगतस्य वा ।
आश्रमा विहितास्सर्वे वर्जयित्वा निराशिषम् ॥

भैक्षचर्यां न तु प्राहुः स्वस्य सद्धर्मचारिणः ॥

निराशिषामिति संन्यासं विहाय त्रयोऽप्याश्रमा भवन्तीत्यर्थः। ब्रह्मचारित्वे च भैक्षचर्या न कार्या। अन्ये त्वपि तु शुद्धा आश्रमान्तरधर्मा अनुष्ठेया इति यावत्।

अन्यदपि भविष्यद्धर्मकथनव्याजेन शूद्रस्य निषिद्धं दर्शयति मत्स्यपुराणं यथा कलियुगधर्माननुक्रम्य—

ततः प्रभृत्ययं लोकः सर्वो व्यापत्स्यते भृशम्।
अनृतोपहतो भ्रष्टो धर्मतः कामतोऽर्थतः ॥
श्रौते स्मार्ते प्रशिथिले नष्टधर्माश्रमे तथा।
सङ्करं दुर्बलात्मानः प्रतिपत्स्यन्ति मोहिताः ॥
ब्राह्मणाः शूद्रयोनिस्थाः शूद्रा वै मन्त्रयोनयः।
उपस्थास्यन्ति तान्विप्रा वेदार्थमभिलिप्सवः ॥

कूर्मपुराणे—

अधार्मिका अनाचारा महाकोपाल्पचेतसः।
वदंति चानृतं लुब्धा मिथोजाताः सुदुःप्रजाः ॥

मिथोजाताः सङ्करजाताः। तथा—

दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः।
विप्राणां कर्म्मदोषैश्च प्रजानां जायते लयः ॥
राजानः शूद्रभूयिष्ठा ब्राह्मणान् बाधयन्ति च।
शुक्लदन्ता जिताक्षाश्च मुण्डाः काषायवाससः ॥

शूद्रा धर्म्मं करिष्यन्ति युगान्ते समुपस्थिते ।
आसनस्थान् द्विजान्दृष्ट्वा न चलंत्यल्पबुद्धयः ॥
ताडयन्ति द्विजेन्द्रांश्च शूद्रा राजोपजीविनः ।
उच्चासनस्थान् शूद्रांस्तु द्विजमध्ये परंतप ॥
ज्ञात्वा सहिष्यते राजा कालिकालबलेन तु ।
पुष्पैश्च भूषणैश्चैव तथाऽन्यैर्मण्डनैर्द्विजाः ॥
शूद्रानभ्यर्चयंत्यल्पश्रुतभाग्यबलान्विताः ।
न प्रेक्षन्तेऽर्चिताश्चापि शूद्रा द्विजवरान् नृप ॥
सेवावसरमालोक्य द्वारि तिष्ठन्ति च द्विजाः ।
वाहनस्थान् समावृत्य शूद्रान् शूद्रोपजीविनः ॥
पठंति वैदिकान् मन्त्रान्नास्तिक्यं घोरमाश्रिताः ।

इति ।

कर्म्मकाले तु ब्राह्मणेन मंत्रो (न) पठनीय इत्युक्तमेव प्राक् । लिङ्गपुराणेऽपि—

शूद्राणां मन्त्रयोनिश्च सम्बन्धो ब्राह्मणैः सह ।
भवतीह कलौ तस्मिन् शयनासनभोजनैः ॥
राजानः शूद्रभूयिष्ठा ब्राह्मणान् घातयन्ति ते ।
शूद्राश्च ब्राह्मणाचाराः शूद्राचाराश्च ब्राह्मणाः ॥
क्षत्रियास्तु न राजानो विप्राः शूद्रोपवर्त्तिनः ।
शूद्राभिवादिनः सर्वे ब्राह्मणैरभिवन्दिताः ॥

आसनस्था द्विजान्दृष्ट्वा न चलंत्यल्पबुद्धयः ।
आस्ये निधाय वै हस्तं कर्णे शूद्रस्य वै द्विजाः ॥
नीचस्य च तदा वाक्यं वदन्ति विनयेन तु ।
अधीयते तदा वेदान् शूद्रा धर्मार्थकोविदाः ॥
यजन्ते चाश्वमेधेन राजानः शूद्रयोनयः ।
तस्मादायुर्बलं रूपं काले प्राप्य प्रहीयते ॥
तदा त्वल्पेन कालेन सिद्धिं गच्छन्ति मानवाः ।
धन्या धर्म्मं चरिष्यन्ति युगान्ते समुपस्थिते ॥
श्रुतिस्मृत्युदितं धर्मं ये चरंत्यनसूयकाः ।
त्रेतायां वार्षिको धर्मो द्वापरे मासिकः स्मृतः ॥
यथाशक्ति चरेत्प्राज्ञस्तदन्हा प्राप्यते कलौ ।

एवमादिवाक्यपर्यालोचनया शूद्रस्य ब्राह्मणेन सहैकशय्यासनभोजनादौ तथा वेदाध्ययनादौ वेदश्रवणे वैदिकार्थप्रवचने विप्राणां स्वपुरस्तात् धावनप्रेषणादौ शुक्लदन्तत्वमुण्डत्वकाषायादिरूपप्रव्राजितवेषधारणपूर्वधर्म्माचरणे विप्रं दृष्ट्वाऽनभ्युत्थाने तत्ताडनादौ विप्राग्रे उच्चशय्यासनवाहनादिसेवनेऽनीक्षणादिना ब्राह्मणस्योपस्थितस्यासत्करणे द्वारि तत्प्रतिरोधने विप्रसेवाग्रहणे उत्तमवर्णधर्माचरणे यागाद्यनुष्ठाने तद्वशानुप्रवर्त्तने च दोषस्तस्मादेतन्न कर्त्तव्यमित्युक्तं भवति ।

तथान्यदपि निषेधति पराशरः—

विक्रीणन्मद्यमांसानि ह्यभक्ष्यस्य च भक्षणम् ।
कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात् ॥

मद्यं गौड्यादि सर्वम् । मांसं भक्ष्यमभक्ष्यं च । अयं च निषेधोऽनापदि । आपदि तु न दोष इत्युक्तं प्राक् । अभक्ष्यं गोमांसादि तद्भक्षणात् । कलौ गोपशुनिषेधात् । अगम्यागमनं मातृभगिन्यादिगमनम् । अत्र च सुरामद्यादिनिषेधेषु विशिष्य त्रैवर्णिकानामेवोपादानाच्छूद्रस्य सुरापानमनिषिद्धमेव ।

पतत्यर्द्धं शरीरस्य यस्य भार्या सुरां पिबेत् ।
पतितार्धशरीरस्य निष्कृतिर्न विधीयते ॥

इति मनुवचनात् । त्रैवर्णिकस्त्रीमात्रपरत्वे त्वेतदनर्थकम् । तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदित्येव निषेधसिद्धेः उद्देश्यगतत्वेन पुंस्त्वस्याविवक्षितत्वात् । अत एव निषेधस्य जातिमात्रनिबन्धनत्वादनुपनीतानां ब्राह्मण्यादीनां च तन्निषेधः सिध्यति । एवं सुरापशूद्रसंसर्गे संसर्गप्रायश्चित्तमपि न भवति । यस्य हि सुरादिमद्यपानं निषिद्धं तस्य तत्सेवने पातित्यम् । पतितसंसर्गश्च पातित्यहेतुः । "तत्संसर्गी च पञ्चमः" इति स्मृतेश्च । तथा च शूद्रस्य सुराया अप्रतिषिद्ध-

त्वात् न तत्संसर्गेन्येषां प्रायश्चित्तम् । त्रैवर्णिकानां तु मद्यपानं निषिद्धमिति तत्संसर्गे शूद्रस्य प्रायश्चित्तमस्त्येव । किन्तु यादृशसुरापसंसर्गे यत्प्रायश्चित्तमुक्तं तच्छूद्रस्य चतुर्थांशन्यूनं कल्प्यमित्याहुः । ब्रह्महत्यादि तु शूद्रस्यापि निषिद्धम् । अहिंसायाः सर्ववर्णसाधारणधर्म्मत्वात् । तदाह विष्णुः—

क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ॥
आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ।
अनभ्यसूया च तथा धर्म्मः सामान्य उच्यते ॥

महाभारते:—

श्राद्धकर्म्म तपश्चैव सत्यमक्रोध एव च ।
स्वेषु दारेषु सन्तोषः शौचं नित्यानसूयता ॥
आत्मज्ञानं तितिक्षा च धर्म्मः साधारणो नृप । इति ।

चातुर्वर्ण्यस्येति शेषः । नच शूद्राणां विद्यायामनाधिकारात्कथं मोक्षधर्मेष्वधिकार इति वाच्यम्, तेषां वेदवाक्यार्थविचारे अनधिकारेऽपि द्विजशुश्रूषाप्रसङ्गोपविष्टानां प्रसङ्गश्रुतपुराणाद्यवगतमोक्षधर्म्मविचारे ऽधिकाराऽविरोधात् तथा चोक्तं स्कान्दसूत-

संहिताग्राम्—

निवृत्तिधर्मनिष्ठश्च ब्राह्मणः पङ्कजेक्षणः ।
भक्तो मुख्याधिकारी च ज्ञानाभासे तथा हरेः ॥
अन्ये च ब्राह्मणा विप्रा राजानश्च तथैव च ।
वैश्याश्च तारतम्येन ज्ञानाभासेऽधिकारिणः ॥
द्विजस्त्रीणामपि श्रौतज्ञानाभासेऽधिकारिता ।
अस्ति शूद्रस्य शुश्रूषा पुराणेनैव वेदनम् ॥
वदन्ति केचिद्विद्वांसः स्त्रीणां शूद्रसमानताम् । इति ।

भारते मोक्षधर्मेषु—

प्राप्य ज्ञानं ब्राह्मणाः क्षत्रिया वा
वैश्याः शूद्रा अपि नीचा अभीक्ष्णम् ।
श्रद्धातव्यं श्रद्दधानेन नित्यं
न श्रद्धातुं जन्ममृत्यू विशेताम् ॥
ज्ञानान्मोक्षो जायते पूरुषाणां
नास्त्यज्ञानादेवमाहुर्द्विजेन्द्राः ।
तस्मात् ज्ञानं तत्वत एषितव्यं
तेनात्मानं मोक्षयेज्जन्ममृत्योः ॥

यत्र च वर्णविशेषोपादानं नास्ति वा शूद्रं प्रति निषेधस्तत्रास्त्येव तस्याधिकारः । तथा च भागवते—

स्त्रीशूद्रद्विजबंधूनां त्रयी न श्रुतिगोचरा ।

इति भारतमाख्यानं कृपया मुनिना कृतम् ॥

इति । द्विजबंधवः द्विजातिभ्यः शूद्रायामुत्पन्नाः । अथवा संस्कारहीना व्रात्या द्विजबन्धवः । अत एव महाभारते---

मामुपाश्रित्य कौन्तेय येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥

इति ।

ततश्च ब्रह्मवधादिमहापातकं शूद्रस्याऽप्यस्त्येव । महापातकप्रायश्चित्तं शूद्रस्य ब्राह्मणापेक्षया चतुर्गुणमधिकम् । तदुक्तं भविष्ये---

पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता ।
वैश्यानां त्रिगुणा प्रोक्ता शूद्राणां तु चतुर्गुणा ॥
पार्षदञ्च व्रतं ज्ञेयं शुद्धये पापकर्मणामिति ।

यस्मिन्विषये ब्राह्मणस्य यत्प्रायाश्चित्तमुक्तं तत्र तस्मिन्नेव विषये क्षत्रियो द्विगुणं वैश्यस्त्रिगुणं शूद्रश्चतुर्गुणं कुर्यादित्यर्थः । यत्तु चतुर्विंशतिस्मृतम्---

प्रायश्चित्तं यदाम्नातं ब्राह्मणस्य महर्षिभिः ।
पादोनं क्षत्रियः कुर्यादर्द्धं वैश्यः समाचरेत् ॥
शूद्रः समाचरेत्पादमशेषेष्वपि पाप्मस्विति ।

तत्प्रातिलोम्यानुष्ठितचतुर्विधसाहसव्यतिरिक्तविषयम् ।

अधमानां तु वर्णानामुत्कृष्टहनने गुरु ।
दोषो गुरुतरो ज्ञेयः क्षत्रादीनां न संशयः ॥

इति भविष्यवचनात् । तथा च याज्ञवल्क्येनापि—

प्रतिलोमापवादेषु चतुस्त्रिद्विगुणा दमाः ।
वर्णानामानुलोम्येन तस्मादर्द्धार्द्धहानितः ॥

इति प्रातिलोम्यकृते वाक्पारुष्ये शूद्रवैश्यक्षत्रियाणां दण्डक्रमेण चातुर्गुण्यं त्रैगुण्यं द्वैगुण्यं चोक्तम । दण्डवच्च प्रायश्चित्तानि भवन्तीति चोक्तम् । अतएवानुलोमोत्पन्नानां मूर्द्धावसिक्तादीनां ब्रह्महन्तृत्वे ब्राह्मणादधिकं क्षत्रियाच्च न्यूनं प्रायश्चित्तं भवति । तच्च ब्राह्मणोक्तप्रायश्चित्तात्सार्द्धगुणं कल्प्यते । तेनाष्टादशाब्दानि तस्य भवन्ति । एवमन्येष्वपि अनुलोमेषु न्यूनं प्रतिलोमेषु चाधिकं कल्पनीयम् । यादृशे विषये शूद्रस्य यत्प्रायश्चित्तमुक्तं तत् तत्स्त्रीबालरोगिवृद्धादेरर्द्धं देयम् । तदाहाङ्गिराः—

अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः ।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च ॥

इति ।

यत्र च वयसि पुंसामर्द्धं तस्मिन्नेव स्त्रीणां पादमात्रम् । तदाहाङ्गिराः—

अर्वाक्तु द्वादशाद्वर्षादशीतेरूर्द्ध्वमेव वा ।
अर्द्धमेव भवेत्पुंसां तुरीयं तत्र योषिताम् ॥

इति ।

इदं च यस्य वर्णस्य यद्यत्प्रायश्चित्तमुक्तं तत्तद्वर्णाद्वृद्धादयोऽर्द्धं स्त्रियश्च पादं कुर्युरिति ज्ञेयम् । यत्तु-पादो बालेषु दात्तव्यः सर्वपापेष्वयं विधिरिति विष्णुवचनं, तदुपनीतबालविषयम् ।

यदपि—

ऊनैकादशवर्षस्य पंचवर्षात्परस्य च ।
प्रायश्चितं चरेद् भ्राता पिता वान्यःसुहृज्जनः ॥
अतो बालतरस्यास्य नापराधो न पातकम् ।
राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यते ॥

इति शंखवचनं, तन्न सर्वात्मना प्रायश्चित्तपरम्, प्रायश्चित्तविधेरनपेक्षिताश्रमवर्णवयोऽवस्थाविशेषत्वेन तेष्वप्यनिरुद्धत्वात् । किन्तु सम्पूर्णप्रायश्चित्ताभावप्रतिपादकम् ।

तथा पञ्चवर्षादूर्द्ध्वं पादाभिधानात्ततोऽर्वाक्किंचिन्न्यूनं प्रायश्चित्तं कल्पयति । शूद्राणां प्रायश्चित्तविशेषे तारतम्यं तु तत्ताद्विधिभ्य एव ज्ञेयम् । शूद्रस्य प्रायश्चित्तोपदेशो पर्षत्त्वं निषिद्धं धर्मविवृतौ—

क्षत्रियोऽप्यथ वैश्यो वा शूद्रो वा न कथंचन ।
प्रायश्चित्तविधानं हि कुर्वीतेति विदुर्बुधाः ॥

इति । चतुर्विंशतिमते—

श्वचर्म्मणि यथा क्षीरमपेयं ब्राह्मणादिभिः ।
तद्वच्छूद्रमुखाद्वाक्यं न श्रोतव्यं कथंचन ॥
पण्डितस्यापि शूद्रस्य शास्त्रज्ञानरतस्य च ।
वचनं तस्य न ग्राह्यं शुनोच्छिष्टं यथा हविः ॥
शूद्रो ज्ञानावलेपेन ब्राह्मणान् भाषते यदि ।
स याति नरकं घोरं यावदाभूतसंप्लवम् ॥

इति । अंगिराः—

तथा शूद्रं समासाद्य सदा धर्मपुरस्सरम् ।
प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम् ॥

इति ।

शूद्रस्य निर्विद्यत्वेन वैदिकमन्त्रसाध्यजपहोमविवर्जितं कृच्छ्रादिव्रतदानरूपमुपदेष्टव्यमित्यर्थः । अन्ये तु—

आरम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः ।
आज्येनैव हि शालाग्नौ जुहुयाद्व्याहृतीः पृथक् ॥
श्राद्धं कुर्याद्व्रतान्ते तु गोहिरण्यादिदक्षिणा ।
स्त्रीणां होमो न कर्त्तव्यः पंचगव्यं तथैव च ॥

इति जाबालवाक्ये प्रकृते शालाग्नावेव स्त्रीणां होमविधानात् स्त्रीशूद्रयोर्लौकिकाग्नौ ब्राह्मणद्वारा होमोऽस्तीति वदन्ति । पंचगव्यं तु स्त्रीणां विकल्पितम् ।

स्त्रीशूद्रस्य विशुद्ध्यर्थं प्राजापत्यं समाचरेत् ।
पंचगव्यं तु कुर्वीत स्नात्वा पीत्वा शुचिर्भवेत् ॥

इति पाराशरेण विहितत्वात् । प्राक् निषिद्धत्वाच्च । शूद्रे तु तन्न निषिद्धम् ।

ये तु,

पंचगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत् ।
उभौ तौ तुल्यकर्म्माणौ पूयाख्ये नरके वसेत् ॥

इत्यस्ति वचनं तत्प्रायाश्चित्तानंगपंचगव्यविषयम् । शूद्रेण प्रायश्चिताङ्गजपहोमौ विप्रद्वारा कार्यौ ।

"अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" इति परिभाषणात् । तथा च धर्मविवृत्तौ—

उपवासो व्रतं होमस्तीर्थस्नानं जपादिकम् ।
विप्रैः सम्पादितं यस्य सम्पन्नं तस्य तत्फलम् ॥

इति ।

शिष्टं प्रायश्चित्तप्रकरणे गोविन्दार्णवे द्रष्टव्यम् ।

देवलः—

शूद्रधर्मो द्विजातिजातिशुश्रूषा पापवर्जनं कुटुम्ब-

पोषणं चेति । विष्णुपुराणे—

द्विजशुश्रूषयैवैष पाकयज्ञाधिकारवान् ।
निजान् जनयते लोकान् शूद्रो धन्यतरस्ततः ॥
दानं च दद्याच्छूद्रोपि पाकयज्ञैर्यजेत च ।
पित्र्यादिकं चैव सर्वं शूद्रः कुर्वीत वै नरः ॥

मनुः—

विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते ।
यदतोऽन्यद्धि कुरुते तद्भवेत्तस्य निष्फलम् ॥

तेनैतदुक्तं भवति । विप्रसेवातत्पर एव शूद्रः पञ्चमहायज्ञादि कुर्यात्तदपि तत्सेवाऽविरोधेन । तत्सेवा-वैमुख्येन तु तत् क्रियमाणमप्यकृतप्रायमेव भवति । तथा-भूतस्य तत्राधिकारप्रतिषेधनात् ।

महाभारते आनुशासनिके—

रागो द्वेषश्च मोहश्च पारुष्यं च नृशंसता ।
शाठ्यं च दीर्घवैरत्वमतिमानमनार्जवम् ॥
अनृतं चातिवादं च पैशुन्यमतिलोभता ।
विकृतिश्चाप्यवज्ञानं जनने शूद्रमाविशेत् ॥
नश्यन्ति तामसा भावाः शूद्रस्य द्विजभक्तितः ।
द्विजशुश्रूषया शूद्रः परं श्रेयोऽधिगच्छति ॥
अहिंसकः शुभाचारो देवताद्विजपूजकः ।

शूद्रो धर्मफलैरिष्टैः स्वधर्मेणैव पूज्यते ॥

तथा—

संचयांश्च न कुर्वीत जातु शूद्रः कथंचन ।
पापीयान् हि धनं लब्ध्वा वशे कुर्याद्गरीयसः ॥
राजा वा समनुज्ञातः कामं कुर्वीत धर्मतः ।

गरीयसो द्विजातीन् वशे कुर्यादाक्रामेन्न गणयेदित्यर्थः । राजावेत्यादि । अथवा शूद्रो यदि राजा भवेत् तदा द्विजैरनुज्ञातः सन् कामं धनसंचयं कुर्वीत । यद्वा । राजावासं राजपरिग्रहं स्थानपालादित्वं प्राप्य अनुज्ञातो द्विजैः सन् कामं धनसंचयं कुर्यात् ।

मनुः—

शक्तेनापि हि शूद्रेण न कार्यो धनसंग्रहः ।
शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते ॥

तथा—

न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति ।
नचाऽस्याऽधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम् ॥

इति ।

अत्र मेधातिथिः यदस्याहत्य शृङ्गग्राहिकया न प्रतिषिद्धं किंत्वनादृतवर्णविशेषं सामान्यशास्त्रेणैव निषिद्धम् । हिंसास्तेयानृतादितद्यतिक्रमादस्य न तथा पात-

कमुत्पद्यते यथा द्विजातीनाम् । तथा योऽस्य संस्कारो विशिष्य नोपदिष्ट उपनयनादिरूपस्तं नार्हति, येषु तु गर्भाधाननामकरणनिष्क्रमणान्नप्राशनविवाहान्त्यकर्म्मसु विशिष्य प्रमाणमस्ति ते न निषिध्यन्ते इति वक्ष्यते । नास्याधिकार इति । अस्य श्रौते स्मार्त्ते च धर्मे मन्त्रैकसाध्येऽधिकारो नास्ति अमन्त्रके च स्नानोपवासार्च्चनादौ साधारणधर्म्मे प्रतिषेधो नास्ति । यद्वा, स्नानोपवासव्रतदानार्चनादौ नाऽस्य शूद्रस्य नित्योऽधिकारोऽस्ति तदकरणे न प्रत्यवैति । अत एव नास्मात्प्रतिषेधोऽप्यस्ति । शिष्टाऽप्रतिषिद्धत्वात्साधारणधर्मत्वेन विहितत्वादभ्युदयकामनया तदनुष्ठानसम्भवादित्यर्थः । एवं लशुनादिभक्षणेऽपि न निषेधस्तद्वर्जने त्वभ्युदय इति वदन्ति । तदुक्तं मनुना—

न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥ इति ।

मांसभक्षणे विध्युक्ते । मद्यशब्दो लशुनादेरप्युपलक्षकः । मैथुने स्वदारेषु ऋतावनृतौ च । यतः सामान्यतो निषिद्धस्यापि वर्जने दृष्टादृष्टफलमुत्पद्यते अतो निवृत्तिर्महाफला न तु ज्योतिष्टोमादेः धर्मस्य प्रतिषेधाभाव इति मन्तव्यम् । तस्य वर्णविशेषोपादा-

नेन विधानात् । न च,

धर्म्मेप्सवस्तु धर्मज्ञाः सतां धर्म्ममनुष्ठितम् ।
मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥

इति मनुवचनात् अमन्त्रकाण्येव ज्योतिष्टोमादीनि तेषां भवन्तीति वाच्यम् । तेषां समन्त्रकेषूत्पन्नेषु मन्त्ररहित्वेनानुष्ठानमशाब्दं स्यात् । यथा चोत्पत्तिवाक्यैर्विहितानि तथैव कर्त्तव्यानि । अन्यथा कर्म्मवैगुण्यापत्तिः। उत्पत्तिवाक्यैश्च समन्त्रकाण्येव कर्म्माण्युत्पादितानि कथममन्त्रस्य शूद्रस्य स्युः ।

अत एव जातकर्मादिष्वपि शूद्रा नाधिक्रियन्ते! मन्त्रवर्जं न दुष्यन्तीति तु येषु स्नानोपवासदेवार्चनादिषु अमन्त्रकतयोत्पन्नेषु साक्षादधिकारो न निषिद्धः तत्र उत्पन्नाशिष्टवैदिकमन्त्रपरिहारेणानुष्ठाने न दोष इत्येवं परम् । तथा च मोक्षधर्म्मेषु व्यासः—

नचेह शूद्रः पततीति निश्चयो नचापि संस्कारमिहार्हतीति च।
श्रुतिप्रवृत्तं न च धर्म्ममश्नुते न चास्य धर्मे प्रतिषेधनं कृतम्॥
मंत्रवर्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीं क्रियाम् ।
यथा यथा हि सद्वृत्तमालवन्तीतरे जनाः
तथा तथा सुखं प्राप्यं प्रेत्य चेह च शेरते ॥ इति ।

अतएव वैदिकमंत्रवत्तया उत्पन्नेषु संस्कारेष्वपि

शूद्रस्य नाधिकारः ।

तथा हि द्विविधः संस्कारो भवति दैवो ब्राह्मणश्च । दैवाः पाकयज्ञाः हविर्यज्ञाः सौम्याश्च । ते तु वैदिकमंत्रसाध्यत्वादस्य न भवन्त्येव । ब्राह्मणा गर्भाधानादयः स्मार्तास्ते च षोडश ।

यदाह जातूकर्ण्यः—

आधानपुंसवनसीमन्तजातनामान्नचौलकाः ।
मौञ्जीव्रतानि गोदानसमावर्तविवाहकाः ॥
अन्त्यं चैतानि कर्माणि प्रोच्यन्ते षोडशैव तु ।
शूद्राणां चैव भवति विवाहश्चान्त्यकर्म चेति ।

एते तु नित्याः । अत्र शूद्राणां त्वेते अमंत्रकाः कार्याः । तदाह यमः—

शूद्रोऽप्येवंविधः कार्यो विना मंत्रेण संस्कृतः ।
न केनचित्समसृजच्छन्दसा तं प्रजापतिः । इति ॥

याज्ञवल्क्योपि—

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।
निषेकादिश्मशानान्तास्तेषां वै मंत्रतः क्रियाः ॥

इति। अत्र विवाहान्त्यकर्मणोरेव शूद्रं प्रति विधानात् अन्ये संस्कारा न सन्तीति गम्यते ।

तथा च सुमन्तुः—

ब्राह्मणक्षत्रियवैश्यानां गर्भाधानसीमन्तोन्नयनजातकर्म्मनामकरणान्नप्राशनचूडोपनयनव्रतचर्याध्ययनसमावर्तनविवाहयज्ञदानानि समानीति ।

मनुरपि—

वैदिकैः कर्म्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥

वैदिककर्माणि वेदमंत्रयुक्तानि तैर्द्विजन्मनां शरीरसंस्कारः कार्यो न शूद्राणाम् । एवं सामान्यतो निषेधेऽपि कानिचित् प्रतिप्रसूयन्ते । तत्र—

भार्यारतः शुचिर्भृत्यभर्त्ता श्राद्धक्रियापरः ।
नमस्कारेण मंत्रेण पञ्च यज्ञान्न हापयेत् ॥

इतिवचनात्पञ्चमहायज्ञश्राद्धभृत्यभरणशौचवद्गर्भाधानमनुज्ञायते ।

भार्यारतत्वं हि नाम ऋतुकालगामित्वम् । स एव च गर्भाधानकालः । एवं नामकरणमपि शूद्रस्य तु जुगुप्सितामिति योगिवचनात् । शूद्रस्य प्रेष्यसंयुतामिति मानवात् ।

शर्म्मान्तं ब्राह्मणे प्रोक्तं वर्म्मान्तं क्षत्रिये भवेत् ।
गुप्तदासात्मकं नाम विज्ञेयं वैश्यशूद्रयोः ॥

इति व्यासवचनात् ।

मासे चतुर्थे कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।
षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥

इति वचनात् ।

शूद्रस्य निष्क्रमणमन्नप्राशनं च भवति वर्णविशेषानुपादानात् । शिशुग्रहणं शूद्रस्यापि प्राप्त्यर्थमिति मेधातिथिरपि । कर्णवेधोऽपि भवति । विशेषानुपादानात् । अन्ये संस्काराः समन्त्रकत्वान्न भवन्ति । ब्रह्मपुराणेऽपि—

"विवाहमात्रसंस्कारं शूद्रोऽपि लभते सदे"ति मात्रशब्देनेतरसंस्काराणां निवृत्तिरुक्ता । तथा च व्याख्यातं कल्पतरौ—"मात्रशब्दस्तु विवाहेतरसंस्कारनिवृत्त्यर्थः । न च मात्रपदात् मन्त्रनिवृत्तिः । अविधत्वादेव शूद्रस्य मन्त्राऽप्रसङ्गादिति । एवं च नामकरणकर्णवेधनिष्क्रमणान्नप्राशनानां वैकल्पिकमनुष्ठानमिति गम्यते । नचैवं स्मृतिबाधप्रसङ्गः । पाक्षिकनामकरणादिविधानेनापि स्मृतेश्चरितार्थत्वात् । चूडाकरणं तु द्विजानामेव । "चूडाकर्म्म द्विजातीनां सर्वेषामेव धर्म्मत" इति मनुवचनात् । वपनं स्वकुलाचारेणास्य भवति । न च तदेव चूडाकर्म्म । पंचचूडता चतुश्चूडतेत्यादिनिमित्तक एव चूडाकर्मशब्दप्रयोगः । शूद्राणां च तदसंभवात् ।

तथा च लौगाक्षिः—

तृतीयस्य वर्षस्य भूयिष्ठे गते चूडाः कारयते दक्षिणतः कमुजावशिष्ठानामुभयतोऽत्रिकाश्यपानां मुण्डा भृगवः पंचचूडा आङ्गिरसो वाजिमेके मङ्गलार्थं शिखिनोऽन्ये यथाकुलधर्मं वा शुक्लपक्षस्य पुण्याहे पर्वणि चेति।

कमुजा शिखा सा तूत्सर्गतो मध्ये शिरसि कार्या वसिष्ठानां तु दक्षिणपार्श्वे भवति। अत्रीणां कश्यपानां च उभयतो वामे दक्षिणे च भृगूनां मुण्डनमेव न शिखाधारणम्। अङ्गिरसां तु पञ्चमध्ये एका चतुर्दिक्षु चतस्र इति। एके पुनर्मङ्गलार्थं वाजिं केशपंक्तिं कुर्वन्ति। सा च समन्ताल्ललाटकर्णमूलस्पर्शिनी भाले भवति। तत्र मध्ये शिखा भवति न भवति च आचारात्। शिखिन इत्यनियमेन यत्र क्वापि शिखामात्रमेव कुर्वन्ति। एवञ्च यथागृह्यं व्यवतिष्ठते। शूद्रस्य वपने शिखाधारणं सर्वमुण्डनं वेति विकल्पः प्रागेव प्रपञ्चितः। उपनयनमपि शूद्रस्य नास्ति। वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यामिति वर्णविशेषोपादानेनैव तच्छ्रवणात्। तथा चापस्तम्बः—

अशूद्राणामदुष्टकर्मणामुपनयनामिति। मनुरपि—

गार्भैर्होमर्जातकर्मचौलमौञ्जीनिबन्धनैः।

वैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥

द्विजानामेव एतानि कर्माणीति दर्शयति । अन्त्यकर्म्म तु शरीरप्रतिपत्तिरूपत्वाद्भवति शूद्रस्य । लौकिकाग्नौ च दाहः । एवं च येषु संस्कारेषु जातकर्मसीमन्तोन्नयनादिषु शूद्रस्यानधिकारः, तत्कर्मकाले कुलपरम्परागतं मङ्गलाचारमात्रं कार्यं न पुनः संस्कारोऽपि । यत्तु—

जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।

इति स्नानदानादिकमुक्तं तदस्यापि भवति । अविरोधात् । अतएव गर्भरक्षा गर्भिणीधर्मदोहददानादयः, षष्टिकापूजनभूम्युपवेशनादयोऽविरुद्धास्तस्यापि भवन्ति । विवाहाद्यारम्भे वाऽभ्युदयिकं श्राद्धं शूद्रस्यामान्नेनैव भवति । "आमेनैव तु शूद्रस्ये"ति वचनादिति वक्ष्यते । संध्यावन्दनमप्यस्य नास्ति। कूर्मपुराणे—

सायं प्रातर्द्विजः सन्ध्यामुपासीत समाहितः ।
कामाल्लोभाद्भयान्मोहान्मुक्तो हि पतितो भवेत् ॥

इति द्विजग्रहणात्। श्रुतिश्च—तदुह एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्र्याभिमंत्रिता अप उर्द्ध्वं विक्षिपन्ति ता एव आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्राक्षिपन्तीति ।

ब्रह्मवादिन इति गायत्र्याभिमन्त्रिता इति वचनादन्येषां गायत्र्यनधिकारिणामनधिकारमाहुः। गायत्र्यधिकारिणश्च त्रैवर्णिका एव। कात्यायनः—"सावित्र्या ब्राह्मणमुपनयेत् त्रिष्टुभा राजन्यं जगत्या वैश्यं सर्वेषां वा सावित्री। स्त्रीणां पूजा विधीयते(?)।

विरक्तानां च शूद्राणामेवं पूजा प्रकीर्त्तिता।
अन्येषामपि सर्वेषां नराणां मुनिपुङ्गव॥
पूजा देवालयं दृष्ट्वा प्रणामस्तस्य कीर्त्तितः।
एवं पूजा कृता येन सफलं तस्य जीवितम्॥

इति। प्रणवेनैवेति प्रणवयुक्तेन पञ्चाक्षरेणेत्यर्थः। नमोन्तेन शिवेनैवेति। शिवाय नम इत्येतावता प्रणवरहितेनेत्यर्थः। एतेन स्त्रीशूद्रयोः प्रणवे नाधिकार इत्युक्तम्। वैष्णवमन्त्रदीक्षा त्वास्ति शूद्रस्य।

तथा च वराहपुराणे—

चातुवर्ण्यस्य वक्ष्यामि दीक्षामथ यशस्विनीमित्यारभ्य,
शूद्रस्यापि प्रवक्ष्यामि मद्भक्तस्य वरानने।
यां तु दीक्षां समासाद्य मुच्यते सर्वकिल्बिषैः॥

इत्युपक्रम्य 'दीक्षा वै सा तु शूद्राणामुपचारश्च ईदृश' इत्युपसंहृतम्। तथा तत्रैव—

अलाभे वेदमन्त्राणां पंचरात्रोदितेन हि।

अविचारेण प्रपद्यन्ते तेषां प्राप्स्यन्ति मानवाः ॥
ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते ।
शूद्रादीनां च तत् श्रोत्रपदवीमुपयास्यति ॥

तत्पञ्चरात्रम् । भविष्यपुराणे—

ब्राह्मणं क्षत्रियं वैश्यं कुलीनं शूद्रमेव च ।
पुरुषं ++यं चापि दीक्षयेत्सूर्यमण्डले । इति ॥

एवं शक्ति विनायक मंत्रदीक्षापि तत्तदागमेषु+++++
च्चैव । पूजायामप्यस्याधिकार उक्तस्तत्रैव ।

अथ शूद्रस्य वक्ष्यामि गदतः शृणु+++ ।
यानि कर्माणि कुरुते शूद्रो मय्यवस्थितः ।
दम्पती मम भक्तौ च मम कर्मपरायणौ ।

तत्सवितुर्वरेण्यमिति सावित्री ब्राह्मणस्य । देव सवितुरिति राजन्यस्य । विश्वारूपाणीति वैश्यस्य ।

अतः शूद्रस्य गायत्र्यभावात्तत्साध्ये सन्ध्यावन्दनकर्मण्यप्यनधिकारः । अपि च—

सन्ध्योपासन++स्यात्सायं प्रातः प्रसन्नधीः ।
नानु तिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् ॥
स शूद्रेण समो लोके सर्व धर्मबहिष्कृतः ।

इति वचने न संन्ध्यारहितस्य शूद्रसमत्त्वाभिधानाच्छूद्रस्य संध्याकर्मण्यनधिकारो गम्यते । यत्तु तस्मिन्का-

ले विष्णुध्यानादि तत्त्वविरोधान्न प्रतिषिध्यते। एवं च नमस्कारमन्त्रेण सन्ध्यावन्दनं शूद्रस्येति वदन्तः परास्ताः। नमस्कारमन्त्रस्य शृङ्गग्राहिकया पञ्चमहायज्ञश्राद्धाग्नौकरणस्नानेष्वेव विधानात्। यज्ञोपवीतमस्य न भवति। उपवीतं वस्त्रविन्यासादीनि बौधायनवचनात्।

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्वकृतं त्रिवृत्।
शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रकम्। इति।
मनुनापि द्विजानामेव तद्विधानात्।

एवं च शूद्राणां श्रौतमन्त्रदीक्षायां स्मार्त्तेष्वपि प्रणवादिषु मन्त्रेषु नाधिकारः। तथा च स्कन्दपुराणे शिवपूजाविषये—

वक्ष्ये पूजाविधिं विप्रा इत्युपक्रम्य "श्रीमत्पञ्चाक्षरेणैव प्रणवेन युतेन त्वि"ति पूजामंत्रमुक्त्वा—

प्रणवेन महादेवं सर्वज्ञं सर्वकारणम्।
ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च सुव्रतः॥
एवं दिने दिने देवं पूजयेदम्बिकापतिम्।
सन्न्यासी देवदेवेशं प्रणवेनैव पूजयेत्।
नमोन्तेन शिवेनैव भागवतौ भक्तौ मत्परौ कर्म्मनियन्त्रितौ।
देशं कालं च जानन्तौ रजस्तमसवर्जितौ।
नमस्कारप्रियौ + त्यं मम चिन्ताव्यवस्थितौ।

शुद्धः कर्म्माणि वेदैर्मे य एवं तु समाचरेत ।
त्यक्त्वा ऋषिसहस्रा + शूद्रमेव तु याम्यहम् ।

तथा नरसिंहपुराणे—

ब्राह्मणाः क्षत्रिया वैश्या स्त्रियः शूद्रान्त्यजातयः ।
सम्पूज्यन्ते सुरश्रेष्ठं भक्त्या सिंहवपुर्द्धरम् ॥
मुच्यन्ते चाशुभैर्दुष्टैर्जन्मकोटिसमुद्भवैः ।
सम्पूज्य तं सुरश्रेष्ठं प्राप्नुवन्त्याभिवांछितम् ॥

इति । तथा लिङ्गपुराणेऽपि—

अथ रुद्रो महादेवो मण्डलस्थ उवाच ह ।
पूज्योऽहं ब्राह्मणानां च क्षत्रियाणां विशेषतः ॥
वैश्यानां चैव शूद्राणां शूश्रूष्यः पूजकस्य च ।
स्त्रीणां चैवाधिकारोस्ति पूजादिषु न संशयः ॥

इति । एतेन च दूरात्पूजामात्रमेवानुज्ञायते न स्पर्शोऽपि । तदुक्तं वृहन्नारदीये—

स्त्रीणामनुपनीतानां शूद्राणां च जनेश्वर ।
स्पर्शने नाधिकारोऽस्ति विष्णोर्वा शङ्करेऽपि च ॥

इति । तथा च,

नमेद्यः शूद्रसंस्पृष्टं लिङ्गं वा हरिमेव वा ।
स सर्वयातनाभोगी यावदाचन्द्रतारकम् ॥
योषिद्भिः सेवितं लिङ्गं विष्णुं वाऽपि नमेत्तु यः ।

स कोटिकुलसंयुक्तं आकल्पं रौरवे बसेत् ॥

तथा,

यः शूद्रेणार्चितं लिङ्गं विष्णुं वा प्रणमेन्नरः ।
न तस्य निष्कृतिर्भूयः प्रायश्चित्तायुतैरपि ॥

इति । सर्वाण्येतानि स्पर्शपूर्वकमर्चां निषेधन्ति न पूजामात्रम् । पूर्वत्र विधेरुदाहृतत्वात् । स्कान्दे तु विशेष उक्तः—

स्वधर्मं यः परित्यज्य परधर्म्मरुचिर्भवेत् ।
चकोरनयने चौरः स मूढश्चन्द्रशेखरे ॥

तेनाहं पूज्यमानोऽपि गन्धं जिघ्रामि कौणपम् ।

इति । तेन स्वधर्महीनेन शिवपूजा न कार्येत्युक्तं भवति । ब्राह्मणस्य तु स्वधर्मत्यागिनोऽप्यस्त्यधिकार इत्युक्तं तत्रैव ।

वेदमन्त्रधनैर्विप्रैरहं तुष्येऽर्चितः सदा ।
न द्विजानां करस्पर्शैरुद्विजामि वरानने ॥
शूद्रकर्मरतेनापि स्पृश्यमानो द्विजन्मना ।
हृष्यामि तेन सुतरां पूज्यमानश्च सुन्दरि ॥

अत्रापि द्विजग्रहणाच्छूद्राणां तत्तुल्ययोगक्षेमाणां स्त्रीणां च करस्पर्शो निषिध्यते । तेन तैर्दूरादेवोपचारनिवेदनमात्रं कार्यम् । अयं च स्पर्शनिषेध इदानीन्तन

प्रतिष्ठितालिङ्गविषयः । न पुनः पुराणप्रातिष्ठितेष्वनादि-
लिङ्गेष्वपि । तदुक्तं नारदीये——

यदा प्रतिष्ठितं लिङ्गं मन्त्रविद्भिर्यथाविधि ।
ततः प्रभृति शूद्रश्च योषिच्चापि न संस्पृशेत् ॥

इति । यत्तु——

शिखां यज्ञोपवीतं च वस्त्रमारक्तमम्भसा ।
स्पर्शनं देवतानां च कायस्थाद्यो विर्जयेत् ॥

तथा, जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् ।
देवताराधनं चेति स्त्रीशूद्रपतनानि षट् ।

इति । तदेवंजातीयकानां पूर्वोक्तरीत्या सदसच्छूद्रपरतया द्विजसेवाविरोधाविरोधाभ्यां यथोक्तविषयतया विरोधः परिहरणीयः। सच्छूद्रलक्षणं चोक्तम्। मासि मासि वपनं द्विजोच्छिष्टभोजनं द्विजशुश्रूषया वृत्तिः पंचमहायज्ञनिष्ठत्वं चेति । तदेवमेते धर्माः सच्छूद्राणामेव भवन्ति तदितरेषां तु सामान्यधर्मा एवाऽहिंसादय इति द्रष्टव्यम् । भगवन्नामकीर्त्तने तु सर्वेषामधिकार इति सर्वेषु पुराणेषु प्रसिद्धम् ।

शिष्टानामवधिर्गुणैकजलधिः सत्सम्पदां शेवधिः
श्रीमत्केशवदासतः समजनि श्रीमात्पिलाजीति यः ॥

तस्यैतस्य कृते कृतेऽत्र कृतिना कृष्णेन शेषेण स-
च्छूद्रा चारशिरोमणौ विधिनिषेधानां विवेकोऽभवत् ॥

इति श्री शूद्राचार शिरोमणौ शूद्रस्य विहित
निषिद्धयोर्विवेकः समाप्तः ।

---

[ अथान्हिकक्रमेण शूद्रे कर्तव्यविशेषः…कथ्यते ]

मनुः—

वाह्मे मुहूर्ते बुध्येत धमार्थौ चाऽनुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च ॥
रात्रैः पश्चिमयामस्य मुहूर्त्तो यस्तृतीयकः ।
स ब्राह्म इति विज्ञेयो विहितः सुप्रबोधने ॥

तथा—

ब्राह्मे मुहूर्त्ते यौ निद्रां न कुर्यातां तु दम्पती ।
तद्‌गृहं देवतैः सार्द्धं पितृभिः सेव्यते सदा ॥

स्मृतिचन्द्रिकायाम्—

ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी ।
तां करोति तु यो मोहात्पादकृच्छ्रेण शुध्यति ॥

विष्णुः—

शयनादुत्थितो यस्तु कीर्त्तयेन्मधुसूदनम् ।
कीर्त्तनात्तस्य पापानि नाशमायान्त्यशेषतः ॥

वामने—

प्रातरुत्थाय यः पश्येच्छ्रोत्रियं सुभगं नृपम् ॥
प्रातरुत्थाय यः पश्येत्स आपद्भ्यः प्रमुच्यते ।
पापिष्ठं दुर्भगं मद्यं नग्नमुत्कृत्तनासिकम् ॥
प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणम ।

अथ मौत्रम । विष्णुपुराणे—

ततस्तल्पात्समुत्थाय कुर्यान्मौत्रं नरेश्वर ।
नैऋत्यामिषुविक्षेपं अतीत्याभ्यधिकं भुवः ॥

ब्रह्मा मुरारि स्त्रिपुरान्तकश्च
भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रः सह भानुजेन
कुर्वन्तु सर्वे मम सुप्रभातम् ॥

तत्र प्रथमतो विलोकनीयानि । कात्यायनः—

श्रोत्रियं सुभगञ्चाश्व ह्यग्निमग्निचितं तथा ।

याज्ञवल्क्यः—

दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ॥

शूद्रस्य यज्ञोपवीताभावात्कर्णे निधानं बाध्यते । न चोपवीतं वस्त्रं विन्यसेदिति बौधायनादि वाक्यै रुपवीतकार्यकरत्वेन विहितस्य वस्त्रोत्तरीयादेरेव कर्णे-

निधानमस्त्विति वाच्यम् । सतो हि यज्ञोपवीतस्य कर्णे निधानं संस्कारः न पुनः श्राद्धस्नानादिषु निवीतत्वादिवदङ्गं, प्रमाणाभावात् । 'विशिष्टो व्युपवीतश्च यत्करोति न तत्कृत' मित्यस्य श्रौतस्मार्तकर्मपरत्वात् ।

भोजनादौ तु प्रायश्चित्तश्रवणात्तद्धारणनियमः ।

न च, पिबतो मेहतश्चैव भुञ्जतोऽनुपवीततः ।

प्राणायामत्रिकं षट्कं नक्तं च त्रितयं क्रमा" दिति प्रायश्चित्तस्मरणं मेहनाङ्गत्वं वोधयतीति वाच्यम् । तस्य द्विजातिविषयत्वात् । तदाह वृद्धपाराशरः—

"यज्ञोपवतिेन विना भोजनं कुरुते द्विजः ।
अथ मूत्रपुरीषे वा रेतः सेचनमेव वा ॥
त्रिरात्रोपोषितो विप्रः पादकृच्छ्रं तु भूमिपः ।
अहोरात्रोषितो वैश्यः शुद्धिरेषा पुरातनी"ति ॥

अतो न शूद्रे वाससः कर्णनिधानप्रसङ्गः । अन्ये तु द्व्यङ्गुलादिनिर्मितो+++++कर्णे निधानं स्थूलवस्त्रादेस्त्वसम्भवान्नैतदित्याहुः । हारीतः—

उच्चारे मैथुने चैव प्रस्रावे दन्तधावने ।
स्नाने भोजनकाले च षट्सु मौनं समाचरेत् ॥

आङ्गिराः—

उत्थाय पाश्चिमे यामे रात्रेराचम्य चोदकम् ।

अन्तर्द्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥
वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः ।
कुर्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः ॥

मनुः—

तिरस्कृत्योच्चरेत्काष्ठं पत्रं लोष्ठं तृणानि च । इति ।

तथा—

प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् ।
दृष्ट्वा सूर्यं निरीक्षेत गामग्निं ब्राह्मणं तथा ॥

मनुः—

छायायामन्धकारे च रात्रावहनि च द्विजः ।
यथासुखमुखः कुर्यात्प्राणबाधभयेषु च ॥

तथा गृह्यपरिशिष्टमते—

कुर्याद्यज्ञोपवीतं तु पृष्ठतः कण्ठलम्बितम् ।
द्विवासा एकवासास्तु दक्षकर्णे निवेशयेत् ॥

कृष्णभट्टीये तु—

मूत्रे दक्षिणकर्णेतु पुरीषे वामकर्णके ।
धारयेद्ब्रह्मसूत्रं तु मैथुने ह्युपवीतवत् ॥

मूलमस्य मृग्यम् । आपस्तम्बः—

तैलाभ्यक्तस्त्वनाचान्तः श्मश्रुकर्माणि मैथुने ।
मूत्रोच्चारं यदा कुर्यादहोरात्रेण शुध्यति ॥

हारीते प्रश्ने—

घ्राणस्य वेष्टयित्वा तु मृद्धात्रीमावहन् गले ।
जलपात्रं दक्षिणपार्श्वे भूमावाधाय चोत्सृजेत् ॥

दक्षः—

उभे मूत्रपुरीषे तु पूर्वमादाय मृत्तिकाम् ।
आददानस्तु वै पश्चात्सचैलो जलमाविशेत्

तथा,

करस्थोदकपात्रस्तु कुर्यान्मूत्रपुरीषके ।
तज्जलं मूत्रसदृशं सुरापानेन तत्समम् ॥

मनुः—

वाय्वग्निविप्रमादित्यमपः पश्यंस्तथैव गाम्
न कदाचित्प्रकुर्वीत विण्मूत्रस्य विसर्जनम्
न फालकृष्टे न जले न चित्यां न च पर्वते ।
न जीर्णदेवायतने न वल्मीके न शाद्वले ॥
न ससत्त्वेषु गर्त्तेषु न गच्छन्न पथि स्थितः ।
न नदीतीरमासाद्य न भस्मनि न गोमये ॥

यमः—

पल्वलानि तडागानि नदीप्रस्रवणानि च ।
तुषाङ्गारकपालानि देवतायतनानि च ॥
राजमार्गश्मशानानि क्षेत्राणि च खलानि च ।

उपरुद्धो न मेहेत छायां दृश्यं चतुष्पथम् ॥
उदकं चोदकान्तं च पन्थानं च विवर्जयेत् ।
वर्जयेद् वृक्षमूलानि चैत्यश्वभ्रबिलानि च ॥

हारीतः—

सोपानत्को न मेहेत न तीर्थे द्वारि चत्वरे ।

देवलः—

आशौचान्नोत्सृजेल्लिङ्गं प्रस्रवोच्चारयोस्तथा ।
तिष्ठेन्नातिचिरं तत्र न च किञ्चिदुदीरयेत् ॥

अथ शौचम् ।

भरद्वाजः—

अथापकृष्य विण्मूत्रं लोष्ठकाष्ठतृणादिना ।
उदस्तवासा उत्तिष्ठेत् दृढं विधृतमेहनम् ॥

स्कान्दे—

वामेन पाणिना शिश्नं धृत्वोत्तिष्ठेत्प्रयत्नवान् ।

व्यासः—

नाश्ममूलफलांगारै रुन्मृज्यान्नास्थिवर्हिषा ॥

विष्णुपुराणे—

मार्जनं वामहस्तेन वीरणाद्यैरयाज्ञिकैः ।
कुर्यान्मूत्रपुरीषाणामेवमायुर्न हीयते ॥

देवलः—

धर्मविद्दक्षिणं हस्तं अधःशौचे न योजयेत् ।
तथैव वामहस्तेन नाभेरुद्ध्वं न शोधयेत् ॥
प्रकृतिस्थितिरेषा हि कारणादुभयक्रिया ।

दक्षः—

शौचे यत्नः सदा कार्यो शौचमूलो द्विजोत्तमः ।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ।

तत्र याज्ञवल्क्यः—

गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ॥
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥

पैठीनसिः—

मूत्रोच्चारे कृते शौचं न स्यादन्तर्जलाशये ।
अन्यत्रोद्धृतेन कुर्यात्तु सर्वदैव समाहितः ॥

विवस्वान् —

रात्रिमात्रं जलं त्यक्त्वा कुर्याच्छौचमनुद्धृतम् ।
पश्चात्तच्छोधयेत्तीर्थमन्यथा ह्यशुचिर्भवेत् ॥

ऋष्यश्रृङ्गः—

यस्मिन्स्थाने कृतं शौचं वारिणा तत्तु शोधयेत् ।

मनुः—

आहृतामन्यशौचार्थं वालुका या सुरूपिणी ॥

न मार्गान्न श्मशानाच्च प्रासादा त्कुड्यतः क्वचित् ।

विष्णुः—

अन्तःप्राण्यङ्गसम्पन्नां हलोत्खाताञ्च नाहरेत् ।

विष्णुपुराणे—

वल्मीकमूषकोत्खातां मृदमन्तर्जलात्तथा ।

शौचावशिष्टां गेहाञ्च मृदं शौचे विवर्जयेत् ॥

यमः —

वापीकूपतडागेषु नाहरेद्बाह्यमृत्तिकाम् ।

आहरेज्जलमध्यात्तु परितो मणिबन्धनात् ॥

कश्यपः——

विप्रे गौरा मृदः प्रोक्ताः क्षत्रे रक्तास्तथोदिताः ।

वैश्यस्य हरिताः प्रोक्ताः कृष्णाः स्त्रीशूद्रयोस्तथा ॥

मनुः—

यस्मिन्देशे तु यत्तोयं या च यत्रैव मृत्तिका ।

सैव तत्र प्रशस्ता स्यात्तया शौचं विधीयते ॥

शातातपः —

एका लिंगे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः ।

मूत्रशौचं समाख्यातं शुक्रे तु द्विगुणं भवेत् ॥

विट्शौचे तु विष्णुपुराणे —

एका लिङ्गे गुदे तिस्रो दश वामकरे तथा ।

उभयोः सप्त दातव्या मृदः शौचोपपादिकाः ॥

हस्ताशौचे हारीतः –

एका लिङ्गे तिस्रोऽपाने दद्याद्दश सव्ये षट् पृष्ठे सप्तोभाभ्यां पृष्ठे सव्यस्य संनिधानात् ।

शङ्खः –

तिस्रस्तु मृत्तिका देयाः कृत्वा तु नखशोधनम् ।
तिस्रस्तु पादयोर्ज्ञेया शौचकामस्य नित्यशः ॥

पादयोः प्रत्येकं मरीचिः –

तिसृभिश्च तथा पादौ शोध्यौ गुल्फौ तथैव च ।
हस्तौ त्वामणिबन्धाच्च लेपगन्धापकर्षणम् ॥
पादयोर्द्धे गृहीत्वा तु सुप्रक्षालितपाणिना ।

इति ब्रह्मपुराणे ।

यथोक्तसंख्ययाऽपि गंधलेपानपकर्षे तु मनुः –

यावताऽपक्रमेद्व्यक्तो गन्धो लेपश्च तत्कृतः ॥
तावन्मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिषु ।
यावत्तु शौचं मन्येत तावत् शौचं विधीयते ॥

देवलोपि –

प्रमाणं शौचसंख्यायां न शिष्टैरुपपादितम् ।

मृत्परिमाणं चोक्तं विट्शौचे मनुना –

अर्द्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ।

द्वितीया च तृतीया च तदर्द्धार्द्धा प्रकीर्तिता ॥

हस्तादिशौचे शातातपः —

आर्द्रामलकमात्रस्तु ग्रास इन्दुव्रते स्मृतः ।
तथैवाहुतयः सर्वाः शौचार्थे याश्च मृत्तिकाः ॥

शङ्खः —

एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम् ॥

आदित्यपुराणे —

स्त्रीशूद्रयोरर्द्धमानं शौचं प्रोक्तं मनीषिभिः। इति ।
गन्धलेपानुवृत्तौ त्वधिकमपि ।

यावत्साध्विति मन्येत तावत् शौचं विधीयते ।
प्रमाणं शौचसंख्यायां न शिष्टैरुपदिश्यते ।

इति देवलोके पितामहः ।

न यावदुपनीयन्ते द्विजाः शूद्रास्तथाङ्गनाः ।
गन्धलेपक्षयकरं शौचमेषां विधीयते ॥

वृद्धपराशरः —

आर्तः कुर्याद्यथाशक्ति स्वस्थः कुर्याद्यथोदितम् ।
बालस्यानुपनीतस्य गन्धलेपक्षयावहम् ॥

दक्षः —

यद्दिवा विहितं शौचं तदर्द्धं निशि कीर्तितम् ।

तदर्द्धमातुरे प्रोक्तमातुरस्यार्द्धमध्वनि ॥

किंच पराशरः —

उपविश्य तु विण्मूत्रं कर्तुं यस्तत्र विन्दति ।
स कुर्यादर्द्धशौचं तु तस्य शौचस्य सर्वदा ॥

यत्र तु संख्याया वैषम्येनार्धकरणासंभवस्तत्र वृध्या मृदर्द्धपरिमाणा ग्राह्या ।

अत्राहुः, शूद्रस्य विवाहात्प्राक् संख्या-नियमाभावः । अपि तु गन्धलेपक्षयकरमित्येव । विवाहाभावेपि द्वादशवर्षानन्तरं मृत्संख्यायामनि-यमः । स च पटुत्वापटुत्वापेक्षया । विवाहानन्तरं तु मृत्संख्यानियमानादरे शूद्रः प्रत्यवैति । एतच्च बा-लस्यानुपनीतस्य गन्धलेपक्षयावहामिति वचनाल्लभ्यत इति । पादप्रक्षालनं तु द्विजातेः पूर्वं दक्षिणस्य ततो वामस्य । शूद्रे तु विपर्ययः । शौचानन्तरं हारीत पक्षे —

शौचं कृत्वा तु त्रिण्मूत्रं दृष्ट्वा स्वस्य परस्य च ।
आदित्यमग्निं सोमं वा पश्यद्गोब्राह्मणावपि ॥

देवलः —

इत्येवमद्भिराजानु प्रक्षाल्य चरणौ पृथक् ।
हस्तौ चामणिबन्धाभ्यां पश्चादासीत संयतः ॥

अथाचमनम् ।

पराशरः—

निबद्धशिखकण्ठस्तु द्विज आचमनं चरेत् ।
कृत्वोपवीतं सव्येंऽसे वाग्यतः कायसंयतः ॥

भारद्वाजः—

आयतं पर्वतः कृत्वा गोकर्णाकृतिवत्करम् ।
संहताङ्गुलिना तोयं गृहीत्वा पाणि(ना)द्विजः ॥

योगी—

मुक्तांगुष्ठकनिष्ठेन [क] रेणा [चमनं] चरेत् ।
ईशान्याभिमुखो भूत्वोपस्पृशेत्तु यथाविधि ॥

योगी—

अन्तर्जानु शुचौ देश उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥

मनुः—

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन ।

हारीतः—

कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥

यमः—

तावन्नोपस्पृशेद्विप्रो यावद्वामेन न स्पृशेत् ।
वामे हि द्वादशादित्या यरुणास्त्रिदशेश्वरः ॥

योगी—

हृत्कंठतालुगाभिस्तु यथासंख्यं द्विजातयः ।
शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः ॥

अन्ततः तालुनिसृष्टाभिः । सकृत् एकवारम् । एतच्च त्रिचतुर्वारमाचामेदिति गौतमोक्तत्रित्वापवादार्थम् । इदमसच्छूद्रे । सच्छूद्रस्य तु वैश्यवच्छौचकल्पश्चेति मानवाद् द्विराचमनमेवेति प्रागुक्तम् । मनुः—

अप्सु प्राप्तासु हृदयं ब्राह्मणः शुद्धिमाप्नुयात् ।
राजन्यः कण्ठतात्नुं च वैश्यः शूद्रः स्त्रियोऽपि च ॥

हृद्गानां प्रमाणमाहोशनाः—

माषमज्जनमात्रा हृदयंगमा भवन्तीति ।

प्रचेताः—

अनुष्णाफेनशीताद्भिर्न वापीप्रदरोदकैः ॥

पैठीनसिः—

आचम्य शेषा आपस्तु सव्येणौ ? विनिक्षिपेत् ।
तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् ॥

वृद्धशङ्खः—

मध्यमाङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं ततः ।
अङ्गुष्ठस्यानामिकाया योगेन श्रवणं स्पृशेत् ॥
कनिष्ठागुंष्ठयागेने स्पृशेत्स्कंधद्वयं ततः ।
नाभिं च हृदयं तद्वत्स्पृशेत्पाणितलेन तु ॥
संस्पृशेत्तु ततः शीर्षमयमाचमने विधिः ।

योगी—

त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ॥

भविष्ये—

यद्भूमावुदकं वीर समुत्सृजति मानवः ।
वासुकिप्रमुखान्नागांस्तेन प्रीणाति भारत ॥

पैठीनसिक्षेपः—

एकं जले स्थले चान्यं पादं कृत्वा ऽऽचमेज्जले ।
द्वावेकत्र तु कुर्वाणस्तत्कर्म्मस्त्वेव शुध्यति ॥

अथाचमननिषेधः ।

देवलः—

सोपानत्को जले मुक्तकेशकच्छशिखोऽपि वा ।
उष्णीषी वापि नाऽऽचामेद्वस्त्रेणावेष्ट्य वा शिरः ॥
न गच्छंन्न शयानश्च न चलन्न परान् स्पृशन् ।
न हसन्न च संजल्पंन् नात्मानं चैव वीक्षयन् ॥

केशान्नीवीमधःकायमस्पृशन्धरणीमपि ।
यदि स्पृशति वै तानि भूयः प्रक्षालयेत्क्रमात् ॥

**यमः—**

अकृत्वा पादयोः शौचं तिष्ठन् भूमौ रुदन्नपि ।
विना यज्ञोपवीतेनाऽनन्तर्वासाश्च नाऽऽचमेत् ॥
आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् ।
शुष्कवासाः स्थले कुर्यात्तर्पणाचमनं जपम् ॥
आर्द्रवासाः स्थले यस्तु यद्याचामेन्नराधमः ।
वस्त्रनिश्च्योतनं तस्य प्रेतास्तत्र पिबन्ति हि ॥

**विष्णुः—**

जान्वोरूर्द्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात् ।
अधस्ताच्छतकृत्वोऽपि समाचान्तो न शुद्ध्यति ॥

**शाङ्खायनः—**

दानमाचमनं होमं भोजनं देवतार्चनम् ।
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥
आसनारूढपादस्तु जान्वोर्वा जङ्घयोस्तथा ।
कृतावसथिको यश्च प्रौढपादः स उच्यते ॥

**व्यासः—**

अपः पाणिनखाग्रेण आचमेद्यस्तु वै द्विजः ।
सुरापानेन तत्तुल्यमित्येवमृषिरब्रवीत् ॥

पीतशेषं पादशेषं शौचशेषं च यज्जलम् ।
तत्सर्वं मूत्रसदृशं पर्य्यग्निकरणं विना ॥

कौर्मे—

न वामहस्तेनोद्धृत्य पिबेद्वक्त्रेण वै जलम् ।

मार्कण्डेयः—

सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ।
नोच्छिष्टं तत्पवित्रं तु भुक्तोच्छिष्टं तु वर्जयेत् ॥

हारीतः—

वामहस्ते कुशान् कृत्वा समाचामति यो द्विजः ।
उपस्पृष्टं भवेत्तेन रुधिरेण मलेन च ॥
तथा, सव्यापसव्यौ कुर्वीत सपवित्रौ करौ बुधः ।
ग्रन्थिर्यस्य च पत्रस्य न तेनाचमनं चरेत् ॥

शङ्खः—

काशहस्तस्तु नाचामेत्कदाचिद्विधिसम्भवात् ।
प्रायश्चित्तेन शुध्येत दूर्वाहस्तस्तथैव च ॥

कृष्णभट्टीये—

आयसेन तु पात्रेण त्रपुसीसकपित्तलैः ।
आचान्तः शतकृत्वोऽपि न कदाचन शुध्यति ॥

मूलं मृग्यम् ।

सांख्यायनः—

स्पृशन्ति बिन्दवः पादौ य आचामतः परान् ।
भौमिकैस्ते समा ज्ञेया न तैरप्रयतो भवेत् ॥

आचमननिमित्तानि—

मनुः—

सुप्त्वा भुक्त्वा च निष्ठीव्य उक्त्वा चैवानृतं वचः ।
पीत्वा योध्येऽध्यमाणश्च आचामेत्प्रयतोऽपि सन् ॥

अथाऽऽचमनानुकल्पः ।

मार्कण्डेयः—

कुर्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम् ।
कुर्वीतालंभनं चापि दक्षिणश्रवणस्य च ॥
यथाविभवतो ह्येतत्पूर्वाभावे परं परम् ।

बृहस्पतिः—

आर्द्रं तृणं गोमयं च भूमिं वा संस्पृशेद् द्विजः ।
तथा, अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसंभवे ॥
मार्जारमूषिकास्पर्शे प्रहासेऽनृतभाषणे ।
निमित्तेष्वेषु सर्वेषु दक्षिणश्रवणं स्पृशेत् ।

वृद्धशातातपः—

पाठकर्माणि निष्ठीव्य दंताश्लिष्टे तथाऽनृते ।
क्षुते पतितसंभाषे दक्षिणं श्रवणं स्पृशेत् ।

अंगिराः—

चण्डालादीन् जपे होमे दृष्ट्वाऽऽचम्य विशुध्यति ।
श्वादीन्स्पृष्ट्वापि वाऽऽचामेत्कर्णं वा दक्षिणं स्पृशेत् ।

सांख्यायनः—

आदित्या वसवो रुद्रा वायुरग्निश्च धर्मराट् ।
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति सर्वदा ॥

अथाचमनापवादः ।

अपश्च त्वौषधं जग्ध्वा कृत्वा तांबूलचर्वणम् ।
सौगन्धिकानि सर्वाणि नाचमेत विचक्षणः ॥
मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।
नोच्छिष्टस्तु भवद्विप्रो यथौर्ववचनं तथा ॥
आपोऽत्राभिमंत्रिताः, शातातपः—
दन्तलग्ने फले मूले भक्ष्ये स्नेहे तथैव च ।
ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः ॥

वशिष्ठः—

दन्तवद्दन्तलग्नेषु यच्चाप्यंतर्मुखे भवेत् ।
आचान्तस्यावशिष्टं स्यान्निगरन्नेव तच्छुचिः ।

अथ दन्तधावनम् ।

वृद्धशातातपः—

मुखे पर्युषिते नित्यं भवत्यप्रयतो यतः ।

तस्मात्सर्वप्रयत्नेन भक्षयेद्दन्तधावनम् ॥
दशाङ्गुलं तु विप्राणां क्षत्रियाणां नवांगुलम् ।
अष्टाङ्गुलं तु वैश्यानां इतरेषां षडङ्गुलम् ॥
प्रातर्भूत्वा च यतवाग्भक्षयेद्दन्तधावनम् ।
चतुरङ्गुलमानं तु नारीणां नात्र संशयः ॥
सुसूक्ष्मं दन्तहीनस्य समदन्तस्य मध्यमम् ।
स्थूलं विषमदन्तस्य त्रिविधं दन्तधावनम् ।

**कात्यायनः—**

पूर्वामुखो धृतिं विद्याच्छरीरारोग्यमेव च ।
दक्षिणेन तथा क्रौर्यं पश्चिमेन पराजयम् ॥
उत्तरेण गवां नाशं स्त्रीणां परिजनस्य च ।
पूर्वोत्तरे तु दिग्भागे सर्वान् कामानवाप्नुयात् ॥

**छन्दोगपरिशिष्टे—**

उत्थापने ते प्रक्षाल्य शुचिर्भूत्वा समाहितः ।
परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम् ।

**मन्त्रस्तु—**

आयुर्बलं यशो वर्चः प्रजाःपशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥

**विष्णुः—**

कनीन्यग्रसमस्थूलं सकूर्चं द्वादशाङ्गुलम् ।

प्रातर्भूत्वा च यतवाग्भक्षयेद्दन्तधावनम् ॥

भारते—

प्रक्षाल्य हस्तौ पादौ च मुखं च सुसमाहितः ।
दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरं ततः ॥
प्राङ्मुखश्चोपविष्टस्तु भक्षयेद्दन्तधावनम् ।
दक्षिणं बाहुमुद्धृत्य उपवीती भूत्वेत्यर्थः ।
उत्तरीयवाससैवोपवीती भवेत् यज्ञोपवीताभावात् ।

भारद्वाजः—

पतितान्त्यजपाखण्डिदेवजीविरजस्वलाः ।
भिषक्पातकिचण्डालान् न प्रेक्षेद्दन्तधावने ॥
शुनकं विड्वराहं च गर्दभं ताम्रचूडकम् ।
अन्यान्न चेदृशान्पश्येत् द्विजः शुद्धौ विचक्षणः ॥

भारते—

त्याज्यं सपत्रमज्ञातमूर्द्ध्वशुष्कं च पाटितम् ।
त्वग्विहीनं ग्रन्थिमुखं तथा पालाशशांशपम् ।

उशनाः—

तिन्दुकेङ्गुदबन्धूकमोचामरजवल्लिजम् ।
कार्प्पासदन्तकाष्ठेन विष्णोरपि हरेच्छ्रियम् ॥

यमः—

आसनं शयनं स्थानं पादुके दन्तधावनम् ।

वर्जयेद् भूतिकामस्तु पालाशं नित्यमात्मवान् ॥

**वर्ज्येषु संग्रहः—**

नश्लेष्मान्तकपीलुवर्बुरधवारिष्टांजनाश्वकुका (?)
वंधूकेङ्गुदशिग्रुधान्विकदलीतिन्दुःशमी शाल्मली ।
पालाशाच्छगुडूचिगुग्गुलशणानो(?)कोविदाराम्रिका
निर्गुण्डीशिखिनीवशाकविटपा वेणुश्च पृष्ठे तथा ।

**नारदः—**

सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः ।
खादिरश्च करञ्जश्च कदम्बश्च वटस्तथा ।
तिन्तिणी वेणुपृष्ठं च आम्रनिम्बौ तथैव च ।
अपामार्गश्च बिल्वश्च अर्कश्चोदुम्बरस्तथा ॥
एते प्रशस्ताः कथिता दन्तधावनकर्माणि ।

**विष्णुः—**

चतुर्दश्यष्टमी षष्ठी नवमी पूर्णिमा तथा ।
एषु स्त्रीतैलमांसानि दन्तकाष्ठं च वर्जयेत् ॥
श्राद्धे जन्मदिने चैव विवाहेऽजीर्णदूषिते ।
व्रते चैवोपवासे च वर्जयेद्दन्तधावनम् ॥

**आचार्यः—**

अष्टम्योश्च चतुर्दश्योः पञ्चदश्योस्त्रिजन्मसु ।
व्यतीपाते च संक्रान्तौ दन्तकाष्ठं न भक्षयेत् ॥

नाद्यादजीर्णवमनकासश्वासज्वरार्दितः ।
पुरोदयाद्रवेस्त्वद्यान्नोदितेऽस्तमिते रवौ ॥

पराशरः—

दीक्षितो ब्रह्मचारी च यतिश्च विधवाङ्गना ।
नित्यमद्याद्दन्तकाष्ठममायां च विवर्जयेत् ॥
नारीणां तु विशेषोऽयं भर्त्तरि प्रोषितेऽपि च
रजस्वला सूतिका च वर्जयेद्दन्तधावनम् ॥
रजस्वला चतुर्थेऽह्नि सूतिका दशमेऽहनि ।
स्नानात्पूर्वं वन्धमोक्षे विप्रेष्वपि समाचरेत् ॥

व्यासः—

प्रतिपद्दर्शषष्ठीषु नवम्यां दन्तधावनम् ।
पर्णैरन्यत्र काष्ठैश्च जिह्वोल्लेखे सदैव तत् ॥
अलाभे दन्तकाष्ठानां निषिद्धदिवसेऽपि वा ।
अपां द्वादशगण्डूषैर्मुखशुद्धिर्भविष्यति ॥

याज्ञवल्क्यः—

इष्टकालोष्ठपाषाणैरितरांगुलिभिस्तथा ।
मुक्त्वा चाऽनामिकांगुष्ठौ वर्जयेद्दन्तधावनम् ।

विष्णुः—

कण्टाकिक्षीरवृक्षोत्थं पर्वार्द्धकृतपूर्वकम् ।
दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथा ॥

व्यासः—

प्रक्षाल्य भङ्क्त्वा तज्जह्याच्छुचौ देशे प्रयत्नतः ।
पतितेऽभिमुखे दैवाद्राज्यमाप्नोत्यभीप्सितम् ॥

स्मृतिरत्नावल्याम्—

चतुरष्टद्विषट्चाष्टगण्डूषैः शुध्यते क्रमात् ।
मूत्रे पुरीषे भुञ्यन्ते रेतःप्रस्रवणेऽपि च ॥
पुरतः सर्वदेवाश्च दक्षिणे पितरस्तथा ।
ऋषयः पृष्ठतः सर्वे वामे गंडूषमुत्सृजेत् ॥

अथ केशप्रसाधनम् ।

विष्णुपुराणे—

स्नातकस्तु ततः कुर्यात्पुमान् केशप्रसाधनम् ।
आदर्शाञ्जनमाङ्गल्यदूर्वाज्यालम्भनानि च ।
स्वमात्मानं घृते पश्येद्यदीच्छेच्चिरजीवितम् ।

अथ स्नानोपयोगितया कुशादिविधिः ।

हारीतः—

कुशहस्तेन यज्जप्तं दानं चैव कुशैः सह ।
कुशहस्तस्तु यो भुंक्ते तस्य संख्या न विद्यते ॥

तथा—

जपहोमहरा ह्येते असुरा व्यक्तरूपिणः ।
पवित्रकृतहस्तस्य विद्रवन्ति दिशो दश ॥

इत्यादिसामान्यतो विधानाच्छूद्रस्याप्येतत् ।
जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ॥
अशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैः ।

मार्कण्डेयपुराणे—
चतुर्भिर्दर्भपिंजूलैः कुर्यात् ब्राह्मपवित्रकम् ।
एकैकन्यूनमुद्दिष्टं वर्णवर्णैर्यथाक्रमम् ॥

स्मृतिभास्करे—
सप्तभिर्दर्भपिंजूलैर्ब्राह्मणस्य पवित्रकम् ।
पञ्चभिः क्षत्रियस्यैव चतुर्भिश्च तथा विशः ॥
द्वाभ्यां शूद्रस्य विहितमित्याहुर्वेदवादिनः ।

अथ स्नानविधिः ।

मार्कण्डेयः—
अस्नातस्य क्रियाःसर्वा भवन्तीहाऽफला यतः
प्रातः समाचरेत्स्नानं तच्च नित्यमिति स्मृतम्
कराभ्यां धारयन्दर्भान् शिखाबन्धं विधाय च
प्राणायामांस्तथा कुर्यात्कालज्ञानं यथाविधि

व्यासः—
स्मृत्वोङ्कारं च गायत्रीं निबध्नीयाच्छिखां तत
पुनराचम्य हृदयं बाहू स्कन्धौ च संस्पृशेत्

एतच्च द्विजानामेव, शूद्रस्य तु तूष्णीमेव, ओंकारगायत्र्यादावनधिकारात् ।

विष्णुपुराणे—

होमदेवार्चनाद्यासु क्रियासु स्नानभोजने ।
नैकवस्त्रः प्रवर्त्तेत द्विजो वाचानिके जपे ॥

मनुः—

न स्नानमाचरेद् भुक्त्वा नातुरो न महानिशि ।
न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ॥

मार्कण्डेय पुराणे—

नादशाकेन वस्त्रेण स्नायात्कौपीनकादृते ।
नान्यदीयेन नार्द्रेण न सूच्या ग्रथितेन च ॥

स्मृति सागरे—

जलान्ते तिलदर्भांस्तु योऽनुष्ठानाय याचते ।
नाऽनुष्ठानफलं तस्य दातुरेव हि तत्फलम् ॥

मनुः—

स्नानोपकरणं सर्वं तस्य दक्षिणभागतः ।
एवं यः कुरुते स्नानं श्रेयो महदवाप्नुयात् ॥

संग्रहे—

जलं देवगृहं चैव शयनं च द्विजालयम् ।
निर्णिक्तपादः प्रविशेन्नानिर्णिक्तः कदाचन ॥

आचार सागरे—

जन्मान्ताभ्यङ्ग्या त्राधी(?)स्नानदन्तमृजासु च ।
तिथिस्तात्कालिकी ज्ञेया पारणे लेखने तथा ॥

इति । मनुः—

प्रक्षाल्य हस्तौ पादौ च शुचिराचम्य वाग्यतः ।
तिथिवारादिकं ज्ञात्वा सुसङ्कल्प्य यथाविधि ॥

स्नायादिति शेषः। कात्यायन सूत्रे तु—'अथाऽतो नित्यस्नान'मित्युपक्रम्य 'प्रक्षाल्य पाणिपादं कुशोपग्रहे बद्धशिखी यज्ञोपवीत्याचम्ये'त्युक्तम् । तत्र नित्यप्राप्ते उपवीते यज्ञोपवीतीति पुनर्वचनं द्वितीयवस्त्रवारणार्थमिति तद्भाष्ये व्याख्यातम् । तेन वाजसनेयिनामेकवस्त्रेण स्नानम् । अन्येषां तु द्विवस्त्रत्वमिति व्यवस्था, इतिपक्षे तत्तदुपदिष्टशूद्राणामपि तद्रीत्यैव व्यवस्था ज्ञेया।

पराशरः—

स्रोतसोऽभिमुखो मज्जेद्यत्रापः प्रवहन्ति वै ।
स्थावरेषु च तोयेषु आदित्याभिमुखः सदा ॥
अप्रवाहोदकस्नानं विप्रपादाभिषेचनम् ।
आदित्याभिमुखः कुर्यात्सन्ध्यावन्दनमेव च ॥

वाजसनेयिनां नद्यादावपि आदित्याभिमुखं स्नानं

इति पक्षे तत्तदुपदिष्टशूद्राणामपि सैव व्यवस्था। गृहस्नाने, तु विशेषमाहाऽऽचार्यः—

गृहे गृहमुखं विद्यादन्यत्राभिमुखो रवेः।
प्रवाहाभिमुखं कुर्यात्स्नानमेवं द्विजोत्तमः॥
शीतोदकं च दर्भांश्च पश्चादुष्णोदकं क्षिपेत्।
स्नानमध्ये त्वाचमनं तर्पणं वस्त्रपीडनम्॥
करपात्रगतं तोयं गृहएतानि वर्जयेत्।
गृहस्नानेन कुर्वीत तर्पणं मार्जनं तथा॥
नाऽन्तरा तर्पणं कुर्यात्पश्चादाचम्य शुध्यति॥
आसने रहितं स्नानं पाषाणे उद्ध्र्वतः स्थिते।
गृहएतानि वर्ज्यानि सर्वदा द्विजसत्तमैः॥
स्नानं कृत्वाऽऽर्द्रवस्त्रं तु ऊद्ध्र्वमुत्तारयेद् द्विजः
आर्द्रवस्त्रमधस्ताच्चेत्पुनः स्नानेन शुध्यति॥

गेहे चेत्तदमन्त्रवदिति छन्दोगपरिशिष्टवचनान्नित्यमपि स्नानं गृहे अमन्त्रकमेव कार्यम्। ईषन्मन्त्रकमित्यन्ये। उष्णोदकस्नानेऽपवादमाह मनुः—

मृते जन्मानि संक्रान्तौ श्राद्धे जन्मदिने तथा।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा॥
पौर्णमास्यां तथा दर्शे यःस्नायादुष्णवारिणा।
स गोहत्याकृतं पापं प्राप्नोतीह न संशयः॥

इति। स्नानमन्त्रेतिकर्तव्यतादिविशेपस्तत्तच्छाखाप्रसिद्धो गोविन्दार्णवे निरूपितस्तत एवावधार्यः। विशेपमाह विष्णुः—

ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते।
तूष्णीमेव हि शूद्रस्य स्त्रीणां च कुरुनन्दन॥

तूष्णीं वैदिकस्मार्तमन्त्रवर्जम्। मदनपालस्तु—

ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते।
तूष्णीमेव हि शूद्रस्य सनमस्कारकं स्मृतम्॥

इत्येवं योगियाज्ञवल्क्यीयत्वेन पठित्वा व्याख्याय, तूष्णीमिति श्रौतस्मार्तमन्त्रेतिकर्तव्यताप्रतिषेधे प्राप्ते, नम इत्येतावन्मात्रं नमस्कारमन्त्रमभ्यनुजानीते। स च नमस्कारमन्त्रः शिष्टाचारप्राप्ते मृदा गोमयेन वा गात्रलेपने विज्ञेयः। अतश्चाऽश्वक्रान्तेत्यादिमन्त्राणां निवृत्तिः। एवं च मनुकात्यायनाद्युक्तेतिकर्तव्यताविशिष्टानि मन्त्रवत्स्नानानि द्विजातिविपयाणि।

श्रीदत्ताह्निकादावुक्तम्—तूष्णीमित्यनेन वैदिका एव मन्त्रा निषिध्यन्ते न पौराणाः। अतएव पद्मपुराणीयः स्नानप्रकारः स्त्रीशूद्रानधीतवेदद्विजातिसाधारण इति।

कल्पतरुकारोऽपि—कर्माङ्गतया पौराणिकमन्त्र-

पाठेऽप्यधिकारोऽस्ति शूद्रस्येत्याह। अन्ये तु पौराणा अपि ब्राह्मणैरेव पठनीयाः स्वयं तु नम इत्येतावन्मात्रमेवोच्चारयेदित्याहुः। स चैवमनुद्धृतैरुद्धृतैर्वा जलैः स्नानं समाचरेत्।

तीर्थं प्रकल्पयेद्विद्वान् मूलमन्त्रेण मन्त्रवित्।
नमो नारायणायेति मूलमन्त्र उदाहृतः॥
दर्भपाणिस्तु विधिना ह्याचान्तः प्रयतः शुचिः।
चतुर्हस्तसमायुक्तं चतुरस्रं समंततः॥
प्रकल्प्यावाहयेद्गङ्गामेभिर्मन्त्रैर्विचक्षणः।
विष्णोः पादप्रसूताऽसि वैष्णवी विष्णुपूजिता॥
पाहि नस्त्वेनसस्तस्मादाजन्म मरणान्तिकात्।
तिस्रः कोट्योऽर्द्धकोटीच तीर्थानां वायुरब्रवीत्॥
दिवि भुव्यन्तरिक्षे च तानि त सन्ति जाह्नवि।
नन्दिनीत्येव ते नाम देवेषु नलिनीति वा॥
नन्दा पृथ्वी च सुभगा विश्वकाया शिवा सिता।
विद्याधरी सुप्रसन्ना तथा लोकप्रसादिनी॥
क्षेमा च जाह्नवी चैव शान्ता शान्तिप्रदायिनी।
एतानि पुण्यनामानि स्नानकाले प्रकीर्त्तयेत्।
भवेत्संनिहिता तत्र गङ्गा त्रिपथगामिनी॥
सप्तवाराभिजप्तेन करसंपुटयोजितम्।

मूर्ध्नि कुर्याज्जलं भूयस्त्रिचतुः पंच सप्त वा ॥
स्नानं कुर्यान्मृदा तद्वदामन्त्र्य तु विधानतः । इति ।

सर्वश्चायं विधिर्माध्याह्निक एव परं प्रातःस्नानेऽपि समानत्वात्कार्यः ।

यत्तु 'प्रातः संक्षेपतःस्नानं मध्याह्ने मांत्रिको विधिः' इति, एतत्साग्निकविषयम् ।

तथा च छन्दोगपरिशिष्टे कात्यायनः—

अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्मणः ।
प्रातर्न तनुयात्स्नानं होमकालो विगर्हितः ॥

यच्छाखाध्यायिना ब्राह्मणेन यः शूद्र उपदिष्टो भवति स तद्गृह्यानुसारेण कर्माणि कुर्यात् तद्गोत्रेणैव व्यवहरेत् । विशिष्यानुपदिष्टस्तु वाजसनेयिकर्माणि कुर्यात् । काश्यपगोत्रं च प्रचक्षते ।

अथ स्नानप्रयोगः

यथोक्ते स्नानकाले मृद्गोमयदूर्वाकुशपुष्पतिलयवधौतवस्त्रयुगाद्यादाय नद्यादितीरं गत्वा शुचौ देशे प्रक्षाल्य मृदादि संस्थाप्य मृद्भिरद्भिश्च पाणी पादौ प्रक्षाल्याचम्य सत्कुशोपग्रहपाणिः शिखापक्षे बद्धशिखो बद्धकच्छो यथासंभवमुत्तरासङ्गोत्तरीयपरिहितवस्त्राद्यादिभिर्द्विवासा नैकवस्त्रो न बहुवस्त्रो न परकायवासाः

प्राङ्मुख उदङ्मुखो वा तीर्थं नमस्कृत्य जलाधिदेवतां वरुणं च नमस्कृत्य जलं प्रविश्य सकृन्निमज्याऽऽचम्यामन्त्रकं प्राणानायम्य विष्णुं स्मृत्वा ऽमुकतीर्थेऽ मुकस्नानमहं करिष्ये इति सङ्कल्प्य नद्यां प्रवाहाभिमुखस्तडागादौ तु सूर्याभिमुखो यथोपदेशं सकृत्त्रिर्वा निमज्जेत्।

पद्मपुराणीयकल्पे तु—

सङ्कल्पानन्तरं नमो नारायणायेति चतुर्हस्तं परितस्तीर्थं प्रकल्प्य नमो नम इति गङ्गामावहेत्। 'विष्णोः पादप्रसूतासी'त्यादिमन्त्रास्तु ब्राह्मणैः पठनीयाः स्वयमित्यन्ये। ततो मूलमन्त्रेण त्रिर्निमज्योन्मज्ज्य मूलमन्त्रेण शिरसि जलाञ्जलीन् दद्यात्। मृत्तिकादिस्नानपक्षे तु मृदं गोमयं च त्रिधा कृत्वा नम इत्युक्त्वा मृद एकेन भागेन शिरोऽनुलिप्य नम इत्युक्त्वा द्वितीयेन भागेन नाभेरधः कायमनुलिम्पेत्। ततो गोमयेन पूर्ववत् नम इत्युक्त्वा गात्रमनुलिप्य सकृन्निमज्योत्थायाचम्य गात्रलग्नमृदाद्यपनीय प्रवाहाभिमुखः सूर्याभिमुखो वा तज्जले निमग्नसर्वाङ्गः त्रिर्द्वादशकृत्वो वाऽघमर्षणार्थं नम इति मन्त्रं जपित्वोत्थाय त्रिर्द्वादशकृत्वो वानिमज्योन्मज्य यथाशाखं स्नानाङ्गतर्पणं कुर्यात्।

तद्यथा—पूर्ववदाचम्य प्राङ्मुख उदङ्मुखो वा नम

इति मन्त्रमुच्चार्य देवांस्तर्पयामि देवास्तृप्यन्तु । तृप्यन्तामिति वा यथोपदेशं देवतीर्थेनाञ्जलित्रयं दत्वा निवीतो भूत्वा नम इति मन्त्रमुच्चार्य ऋर्षींस्तर्पयामि ऋषयस्तृप्यन्तामिति वा प्रजापतितीर्थेन द्वौ द्वौ अञ्जली वा त्रयं दद्यात् । दक्षिणाभिमुखो भूत्वा प्राचीनावीती नम इति मन्त्रमुच्चार्य पितॄंस्तर्पयामि पितरस्तृप्यन्तामिति पितृतीर्थेनाञ्जलित्रयं दद्यात् । ततो द्विराचम्य वासोयुगं परिधाय पुनराचम्य वक्ष्यमाणलक्षणं तिलकं कृत्वा नम इति सूर्यं नत्वा कुशपुष्पाक्षतैर्यथालाभं मिश्रितैः सलिलैस्ताम्रपात्रस्थितैरञ्जलिस्थितैर्वा नम इत्येव सूर्यायार्घ्यं दत्वा वस्त्रं निष्पीड्याचम्य महद्भ्यो दण्डवन्निपत्य गृहं गच्छेत् । मध्याह्नस्नानमप्येवमिति विष्णुः ।

स्नातश्चार्द्रवस्त्रो देवपितृतर्पणमन्तःस्थ एव कुर्यात् । परिवर्तितवासाश्चेत्तीर्थतीरमुत्तीर्येति शातातपः ।

तर्पणं तु शुचिः कुर्यात्प्रत्यहं स्नातको द्विजः ।
देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम् ॥ इति ।

द्विज इति प्राधान्येनाभिधानान्नेतरनिवृत्तिः ।

स्नानदेवार्चने होमे स्वाध्यायपितृतर्पणे ॥
आवश्यके जपे होमे भवेद्वाचंयमः सदा ।

योगियाज्ञवल्क्यः—

स्नानं दानं जपं होमं स्वाध्यायं पितृतर्पणम् ।
नैकवस्त्रो द्विजः कुर्याच्छ्राद्धभोजनकीः क्रियाः ।

यदा स्थलस्थस्तर्पणं करोति तदा पूर्वोक्तविधिना स्नात्वा धौते वाससी परिदध्यात् ।

तथा च योगियाज्ञवल्क्यः—

स्नात्वैव वाससी धौते अक्लिष्टे परिधाय च ।
प्रक्षाल्योरुं मृदाऽद्भिश्च हस्तौ प्रक्षाल्य वै तदा ॥
अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च ।
कुतपं योगपट्टं वा द्विवासा येन वै भवेत् ॥
यावद्देवानृषींश्चैव पितॄंश्चैव न तर्पयेत् ।
तावन्न पीडयेद्वस्त्रं येन स्नातो भवेन्नरः ॥
निष्पीडयति यः पूर्वं स्नानवस्त्रं तु तर्पणात् ।
निराशाः पितरस्तस्य यान्ति देवाः सहार्षिभिः ॥

मार्कण्डेयपुराणे—

अवमृज्यान्नवस्नातो गात्राण्यवरपाणिना ।
नैव निर्धुनुयात्केशान् वासश्चैव न निर्धुनेत् ॥
अवरपाणिना रिक्तेन पाणिना ।

केशश्मश्रुजलापकर्षणार्थं च शिरोवेष्टनं वस्त्रान्तरेण कुर्यात् ।

तथा च महाभारते—

आप्लुतः सोऽधिवासेन जलेन च सुगन्धिना ।
राजहंसनिभं प्राप्य चोष्णीषं शिथिलार्पितम् ॥
जलशोषनिमित्तं वै वेष्टयामास मूर्द्धनि । इति ।
शिथिलार्पितं यथा भवति तथा मूर्द्धनि वेष्टयामासेत्यर्थः ॥

मनुः—

ब्राह्मणस्य सितं वस्त्रं नृपते रक्तमुल्बणम् ।
पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते ॥
नीलं मलवदिति श्लक्ष्णमित्यर्थः ।

अथोर्द्ध्वपुण्ड्रविधिः

ललाटे केशवं विद्यान्नारायणमथोदरे ।
माधवं हृदये विद्याद् गोविन्दं नाभिकूपके ॥
उदरे दक्षिणे पार्श्वे विष्णुरित्यभिधीयते ।
तत्पार्श्वे वामभागे तु मधुसूदनमुत्तरे ॥
त्रिविक्रमं कण्ठदेशे वामे कुक्षौ तु वामनम् ।
अंसे तु श्रीधरं वामे हृषीकेशं तु उत्तरे ॥
पृष्ठे तु पद्मनाभं च कुक्षौ दामोदरं स्मरेत् ।
द्वादशैतानि नामानि वासुदेवेति मूर्द्धनि ॥
पूजाकाले च होमे च सायं प्रातः समाहितः ।
नामान्युच्चार्य विधिना धारयेत्पुण्ड्रकानि च ॥

अशुचिर्वाऽप्यनाचारो मनसा पापमाचरन् ।
शुचिरेव भवेन्नित्यमूर्ध्वपुण्ड्रधरो नरः ॥
तिर्यग्भूत्वा मृदा चोर्ध्वं गन्धेन च यथेच्छया ।

ब्रह्माण्डपुराणे—

ऊर्ध्वपुण्ड्रं द्विजः कुर्यात् क्षत्रियस्तु त्रिपुण्ड्रकम् ।
ऊर्ध्वचन्द्रं तु वैश्यस्य वर्त्तुलं शूद्रजातिषु ॥
शूद्रस्य सन्ध्यावन्दनं नास्तीति प्रागुक्तम् ।
अथ पञ्चमहायज्ञान्तःपातिनो ब्रह्मयज्ञस्य विधिः ॥

तस्य काल उक्तः छन्दोगपरिशिष्टे—

स चार्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ।
वैश्वदेवावसाने वा नान्यदत्ते निमित्ततः । इति ॥

अत्र पश्चाद्वा प्रातराहुतेरिति द्वितीयः पक्षो द्विजातिविषयः । शूद्रस्य तु निरग्नित्वेन प्रातर्होमाऽसम्भवात् । अतस्तर्पणात्प्राक् वैश्वदेवावसाने चेति पक्षौ शूद्रविषयौ ॥

याज्ञवल्क्यः—

वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।
जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥
अत्रानधिकारिणं शूद्रमधिकृत्य स एवाह—
नमस्कारेण मन्त्रेण पंच यज्ञान्न हापयेत् ॥ इति ।

बौधायनः—अथ आचम्य दर्भान् धारयमाणः

प्राङ्मुख इति ।

अथाऽस्य प्रयोगः—

तद्यथा स्नानानन्तरमुक्तकाले प्राङ्मुख उपविश्याचम्य ब्रह्मयज्ञेन यक्ष्य इति सङ्कल्प्याप उपस्पृश्य प्रागग्रेषु दर्भेष्वासीनः सपवित्रोपग्रहो ऽन्यान् दर्भान् करसंपुटेन धारयमाणः कृतोपस्थः पद्मासनेनोपविष्टो व्यत्यस्तपाणिपादो वा यथोपदेशमुपविष्टो नम इति नमस्कारमन्त्रं नमो नम इति त्रिस्ततो ऽप्यधिकं वाभ्यस्येष्टो ब्रह्मयज्ञ इति उक्त्वा दर्भान्परित्यज अप उपस्पृश्याचामेत् । किं च येषु स्तोत्रादिषु साक्षाच्छूद्रस्य पाठाभ्यनुज्ञानं पुराणे दृश्यते तत्पाठेन वा ब्रह्मयज्ञं निर्वर्त्तयेदिति ।

## अथ तर्पणम् ।

शातातपः—

तर्पणं तु शुचिः कुर्यात् प्रत्यहं स्नातको द्विजः ।<br>देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम् ॥

प्रत्यवायश्चोक्तो ऽकरणे—

देवताश्च पितॄंश्चैव मुनीन्वै यो न तर्पयेत् ।<br>देवादीनामृणी भूत्वा नरकं स व्रजत्यधः ॥

**मनुः—**

चतुर्णामपि वर्णानां तर्पणं तु भवेत्सदा ।
तस्मादात्मविशुद्ध्यर्थं तर्पयेत्पितृदेवताः । इति ।

**स्कान्दे—**

प्रत्यहं तर्पणं कार्यं भर्त्तुः कुशातिलोदकैः ।
तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम् । इति ॥

एतच्च पुत्राद्यभावे ।

**अङ्गिराः—**

मार्जनं तर्पणं श्राद्धं न कुर्याद्वारिधारया ।
कुर्वीत यदि मूढात्मा रौरवं नरकं व्रजेत् ॥

**शङ्खलिखितौ—**

नेष्टकचिते पितॄंस्तर्पयेत् ।

**कूर्मपुराणे—**

देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ।

अक्षता यवास्तण्डुला वा ।

पितॄन्भक्त्या तिलैः श्लक्ष्णैः स्वसूत्रोक्तविधानतः ।

**गोभिलः—**

शुक्लैस्तु तर्पयेद्देवान् मनुष्यान् शबलैस्तिलैः ।
पितॄंस्तु तर्पयेत् श्लक्ष्णैस्तर्पयन्सर्वदा द्विजः ॥

अत्र विशेषमाह योगियाज्ञवल्क्यः—

यद्युद्धृतेन सिञ्चेत तिलान्संमिश्रयेज्जले ।
अन्यथा वामहस्तेन ततस्तर्पणमाचरेत् ॥

स्मृत्यन्तरे—

वामहस्ते तिलान्क्षिप्त्वा जलमध्ये तु तर्पयेत् ।
स्थले शाट्यन्तरे पात्रे रोममूले न कुत्रचित् ॥
वामबाहावपि रोममूले न स्थापयेदित्यर्थः ।

तथा मरीचिरपि—

मुक्तहस्तेन दातव्यं न मुद्रां तत्र दर्शयेत् ।
वामहस्ते तिला ग्राह्या मुक्त्वा हस्तं तु दक्षिणम् ॥

मरीचिः—

तिलानामप्यलाभे तु सुवर्णरजतान्वितम् ।
तदभावे निषिञ्चेत्तु दर्भैर्मंत्रेण वा पुनः ॥

तथा,

विना रूप्यसुवर्णेन विना ताम्रतिलैस्तथा ।
विना दर्भैश्च मन्त्रैश्च पितृणां नोपतिष्ठते ॥

सत्यव्रतः—

खड्गमौक्तिकहस्तेन कर्त्तव्यं पितृतर्पणम् ।
मणिकाञ्चनदर्भैर्वा न शुद्धेन कदाचन । इति ।

**मनुः—**

राजतैर्भाजनैरेषामथवा रजतान्वितैः ।
वार्यपि श्रद्धया दत्तमक्षयायोपकल्प्यते । इति ॥

**योगियाज्ञवल्क्यः—**

अनामिकाधृतं हेम तर्जन्या रूप्यमेव च ।
कनिष्ठिकाधृतं खड्गं तेन पूतो भवेन्नरः । इति ॥

**पितामहः—**

हेमरूप्यमयं पात्रं ताम्रकांस्यसमुद्भवम् ।
पितॄणां तर्पणे पात्रं मृन्मयं तु परित्यजेत् ॥

**शङ्खः—**

सौवर्णेन पात्रेण राजतेनौदुम्बरेण खड्गपात्रेणान्यपात्रेण चोदकं पितृतीर्थस्पृग् दद्यादिति ।

**व्यासः—**

एकैकमञ्जलिं देवा द्वौ द्वौ च सनकादयः ।
अर्हन्ति पितरस्त्रींस्त्रींस्त्रियस्त्वेकैकमञ्जलिम् ॥

**स्मृतिचन्द्रिकायां शालङ्कायनवचनम्—**

मातृमुख्याश्च यास्तिस्रस्तासां दद्याज्जलाञ्जलीन् ।
त्रींस्त्रीनथ तथाऽन्यासां दद्यादेकैकमञ्जलिम् ॥
सपत्न्याचार्यपत्नीनां द्वौ द्वौ दद्याज्जलाञ्जली । इति ।

विष्णुपुराणे—

त्रिरपः प्रीणनार्थाय देवानामपवर्जयेत् ।
ऋषीणां तु यथान्यायं सकृच्चापि प्रजायते । इति ॥

तर्पणे प्रकारमाह यमः—

द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम् ।
गोश्रृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥

गोश्रृङ्गपदार्थं विवृणोति(?)—दक्षः—

प्रादेशमात्रमुद्धृत्य सतिलः प्राङ्मुखः सुरान् ।
उदङ्मनुष्यांस्तर्पेत पितॄन्दक्षिणतस्तथा । इति ॥

हारीतः—

आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् ।
शुष्कवासाः स्थले कुर्यात्तर्पणाचमनं जपम् ॥

जलतर्पणे विशेषमाह कार्ष्णाजिनिः—

देवतानां पितॄणां च जले दद्याज्जलाञ्जलिम् ।
असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलिम् ॥

स्थलाशुद्धौ तु सर्वेषामेव जलएव तर्पणमाह योगियाज्ञवल्क्यः—

यदाऽशुचिस्थले वा स्यादुदके देवतापितॄन् ।
तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम् ॥

सत्यव्रतः—

कृतोपवीती देवेभ्यो निवीती च भवेत्ततः ।
मनुष्यांस्तर्पयेद्भक्त्या ब्रह्मपुत्रानृषींस्तथा ॥
अपसव्यं ततः कृत्वा सव्यं जान्वाप्य भूतले ।
दर्भपाणिस्तु विधिना प्रेतान् सन्तर्पयेत्ततः ।

वृद्धयाज्ञवल्क्यः—

तृप्यात्विति समुच्चार्य तृप्यतामित्यथापि वा ।
विधिज्ञो निक्षिपेत्तोयं देवादीनामशेषतः । इति ॥

तथा,

चतुर्णामपि वर्णानां पितॄणां पितृगोत्रतः ।
पितृगोत्रे कुमारीणामूढानां भर्तृगोत्रतः । इति ॥

पितृतर्पणकृत्ये पैठीनसिः—

अपसव्यं ततः कृत्वा भूत्वा च पितृदिङ्मुखः ।
पितॄन् दिव्यानदिव्यांश्च पितृतीर्थेन तर्पयेत् ॥

दिव्या वसुरुद्रादित्याः । अदिव्याः स्वपित्रादयः ।

तत्र प्रकारमाह स एव—

स्वनामगोत्रग्रहणं पुरुषं पुरुषं प्रति ।
तिलोदकाञ्जलींस्त्रींस्त्रींनुच्चैरुच्चैर्विनिक्षिपेत् ॥

अथ तर्पणीयक्रमः ।

ताताम्बात्रितयं सपत्नजननी मातामहादित्रयं

सस्त्रिस्त्रीतनयादितातजननीस्वभ्रातरः सास्त्रियः ।।
ताताम्बात्मभगिन्यपत्यधवयुक्जायापिता सद्गुरुः
शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे। इति ॥

अथ तर्पणप्रयोगः ।

आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य देवर्षिपितृतर्पणं करिष्य इति सङ्कल्प्य प्राङ्मुख उपविश्य उपवीती देवतीर्थेन सयवैः कुशाग्रैर्देवान् उदङ्मुखो निवीती प्रजापतितीर्थेन सशुक्लतिलैः कुशमध्यै ऋषीन्दक्षिणमुखः प्राचीनावीती पितृतीर्थेन सकृष्णतिलैर्द्विगुणीकृतकुशमूलैः पितॄंस्तर्पयेत् । तत्रापि,

एकैकमञ्जलिं देवा द्वौ द्वौ वै सनकादयः ।
अर्हन्ति पितरस्त्रींस्त्रींस्त्रियस्त्वैकैकमञ्जलिम् ॥

इत्यनुसारेण जनैः क्रमो ज्ञेयः । अविशेषेणाञ्जलित्रयमित्येके । पितृवर्गतर्पणानन्तरं मातामहवर्गतर्पणं ततो मातृवर्गतर्पणमिति वाजसनेयिनां तदुपदिष्टशूद्राणां च क्रमः । पितृवर्गतर्पणानन्तरं मातृवर्गतर्पणं ततो मातामहवर्गतर्पणमिति अन्यशाखीयानां तदुपदिष्टशूद्राणां च क्रमो ज्ञेयः । तत्तच्छाखाभेदात्तर्पणीयदेवताभेदोऽपि तत्तच्छाखिनां तदुपदिष्टशूद्राणां च भवति । तच्च तच्च तत्तत्कल्पेभ्य एवावधार्यम् ।

वौधायनीयः प्रकारस्तु लिख्यते। तत्रोपवीती सन् ब्रह्मादयो देवास्तान्देवांस्तर्पयामि।

सर्वांश्च गणांस्तर्पयामि इति देवतर्पणम्।

अथ निवीती कृष्णद्वैपायनादयो ये ऋषयस्तानृषींस्तर्पयामि। सर्वांश्च ऋषिपत्नीस्तर्पयामि। सर्वांश्च ऋषिपुत्रांस्तर्पयामि। सर्वांश्च ऋषिपौत्रांस्तर्पयामि। सर्वांश्च ऋषिगणांस्तर्पयामि। इति ऋषितर्पणम्।

प्राचीनावीती, सोमः पितृमान्यमो अङ्गिरस्वान् अग्निष्वात्ता वर्हिषदः कव्यवाहनादयो ये पितरस्तान् पितॄंस्तर्पयामि। सर्वान् पितॄंस्तर्पयामि। सर्वांश्च पितृपत्नीर्नमस्तर्पयामि। सर्वांश्च पितृपुत्रान्नमस्तर्पयामि। सर्वांश्च पितृपौत्रांस्तर्पयामि। सर्वान्पितृगणान्नमस्तर्पयामि। अस्मत्पितरममुकगोत्रममुकदासं वसुरूपं तर्पयामि। अस्मत्पितामहममुकगोत्रममुकदासं रुद्ररूपं तर्पयामि। अस्मत्प्रपितामहममुकगोत्रममुकदासमादित्यरूपं तर्पयामि। अस्मन्मातरममुकगोत्राममुकदासीं वसुरूपां तर्पयामि। अस्मत्पितामहीममुकगोत्राममुकदासीं रूद्ररूपां तर्पयामि। अस्मत्प्रपितामहीममुकगोत्राममुकदासीमादित्यरूपां तर्पयामि। अस्मन्मातामहममुकगोत्रममुकदासं वसुरूपं तर्पयामि।

अस्मन्मातुः पितामहममुकगोत्रममुकदासं रुद्ररूपं तर्पयामि । अस्मन्मातुः प्रपितामहममुकगोत्रममुकदासमादित्यरूपं तर्पयामि । अस्मन्मातामहीममुकगोत्राममुकदासीं वसुरूपां तर्पयामि । अस्मन्मातुः पितामहीममुकगोत्राममुकदासीं रुद्ररूपां तर्पयामि । अस्मन्मातुः प्रपितामहीममुकगोत्राममुकदासीमादित्यरूपां तर्पयामि ।

अथ प्रत्यासत्तिविशेषात् गुर्वादिसुहृदन्तांस्तर्पयित्वा,

आब्रह्मस्तम्बपर्यंतं देवर्षिपितृमानवाः ॥
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ।
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥

इत्यञ्जलित्रयं दद्यात् । अत्राहुः—यदपि तत्तच्छाखाभेदेन तर्पणे बहवः पक्षाः सन्ति तथापि शाखानामनेकत्वाद्देशाचारसम्प्रदायानां चानन्तत्वात् पुराणोक्तस्तर्पणप्रकारः शूद्रस्य मुख्यः, पुराणधर्म्माणां स्त्रीशूद्रानपेक्ष्य विशिष्य प्रवृत्तत्वात् ।

तत्र पद्मपुराणोक्तस्तर्पणप्रकारो लिख्यते ।

ब्रह्माणं तर्पयामि । विष्णुं तर्पयामि । रुद्रं तर्पयामि । देवांस्तर्पयामि । नागांस्तर्पयामि । गन्धर्वान् ,अ-

प्सरसः, असुरान्, सुपर्णांस्तर्पयामि। तरूनजम्भकान्, खगान्, वाय्वाधारान्, जलाधारानाकाशगामिनस्तर्पयामि। निराधाराश्च ये जीवाः पुण्यरतास्तांस्तर्पयामि। निराधाराश्च ये जीवाः पापे रतास्तांस्तर्पयामि। इति देवतर्पणम्।

पौरस्त्यास्तु ब्रह्माणं रुद्रं विष्णुं प्रजापतिं च प्रत्येकमेकैकाञ्जलिना तर्पयित्वा ततः,

देवा यक्षास्तथा नागा गन्धर्वाप्सरसोऽसुराः।
क्रूराः सर्पाः सुपर्णाश्च तथा खे जम्भकाः खगाः॥
वाय्वाधारा जलाधारास्तथैवाकाशगामिनः।
निराधाराश्च ये जीवाः पापे धर्मे रताश्च ये॥
तेषामाप्यायनायैव दीयते सलिलं मया।

इति मनसा जपन्नम इत्युच्चार्य एकमञ्जलिं दद्यादित्याहुः।

ततो निवीत्युदङ्मुखः कुशमध्येन प्रजापतितीर्थेन ऋषीन्मनुष्यांश्च तर्पयेत्। ततः प्राच्यां नम इत्युक्त्वा,

सनकश्च सनन्दश्च तृतीयश्च सनातनः।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा॥
सर्वे ते तृप्तिमायान्तु मद्दत्तेना(म्बुना)सदा।

इति मनसा जपन्नम इत्युच्चार्य अञ्जलिं दद्यादित्याहुः।

अन्ये तु सनकं तर्पयामि सनकस्तृप्यतु तृप्यतामिति तान् प्रत्येकं पञ्चशिखपर्यन्तानञ्जलिभ्यां तर्पयेत् इति वदन्ति। ततो मरीचिं तर्पयामि, अत्रिं, अङ्गिरसं, पुलस्त्यं, पुलहं, क्रतुं, प्रचेतसं, वसिष्ठं, भृगुं, नारदं, देवान्ब्रह्मऋषीनिति क्रमेण तर्पयेत्। ततो दक्षिणामुखो भूत्वा प्राचीनावीती सव्यं जान्वाच्य द्विगुणभग्नकुशैः पितृतीर्थेन पितृंस्तर्पयेत्। अग्निष्वात्तांस्तर्पयामि, सोमपान्हविष्मतः, ऊष्मपान्, सुकालिनः, बर्हिषदः, आज्यपान्।

अथ स्वपित्रादितर्पणम्। तच्च यथोपदेशं यथाशाखं कुर्यात्। तत्र नाम्नो गोत्रस्य च प्रयोगपौर्वापर्ये न नियम इति केचित्। वसुरुद्रादित्यरूपत्वमपि केचिन्न स्मरन्ति। अस्मत्पितरं अमुकदासं अमुकगोत्रं वसुस्वरूपं तर्पयामि नमः। एवं पितामहं तु रुद्ररूपं, प्रपितामहं आदित्यरूपमिति विशेषणं योज्यम्। स्त्रीतर्पणे च अस्मन्मातरममुकगोत्राममुकदासीदां वसुरूपां तर्पयामि नमः। एवं पितामह्यां रुद्ररूपां, प्रपितामह्यां आदित्यरूपामिति विशेषणीयम्। एवं मातामहादिमातामह्यादितर्पणं कृत्वा गुरुपत्नी पितृव्यमातुलादीनामपि कारुण्येन तर्पणं कुर्यात्। ततः,

येऽबान्धवा बान्धवा वा येऽन्यजन्मनि वान्यथा ।
ते तृप्तिमखिला यान्तु यश्चास्मत्तोऽभिवाञ्छति ॥
इति मनसा जपन्नम इत्युच्चार्याञ्जलित्रयं दद्यात् । ततः,
ये केचास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥

इति मनसा जपन्वस्त्रं निष्पीडयेत् । ततस्तर्पणकुशान्परित्यजेत् ।

ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे ।
धृता मूत्रपुरीषे च तेषां त्यागो विधीयते ॥
चितौ दर्भाश्च ये मार्गे स्वाध्याये पितृतर्पणे ।
स्तरणासनपिण्डेषु न ग्राह्याः सप्त वै कुशाः ।

इत्यापस्तम्बवचनात् । एतच्चोपवीतिना प्राङ्मुखेनोदङ्मुखेन वा कार्यम् । न पितृधर्मेण । न हि पित्रुद्देशेनैषां त्यागो विहित इति । अन्ये तु,

लतागुल्मेषु वृक्षेषु ये चास्मात्पितरो गताः ।
ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः कुशैः शुभैः ।

इति मन्त्रं पठन्ति । पितृकर्मत्वात्पितृधर्मेण त्यागमाचक्षते । जीवत्पितृकस्य च देवार्षितर्पणं पूर्ववत् । पितृतर्पणे तु विशेषः कथ्यते । तस्य कृष्णतिलैस्तर्पणं तर्जन्यां रूप्यधारणं च निषिद्धम् । कव्यवाहनादिबर्हि-

पदन्ता दिव्यपितरोऽवश्यं तर्पणीयाः। कव्यवाहं तर्पयामि, अनलं, सोमं, अर्यमणमग्निष्वात्तान्, सोमपान्बर्हिषद इति। पितुस्तु पातित्यादिनाऽनधिकारे 'येभ्य एव पिता दद्यात्तेभ्यो दद्यात्सुतः स्वय'मिति द्रष्टव्यम्। अत्र केचिद्यमतर्पणमपीच्छन्ति। तच्च देवत्वपक्षे यमस्य उपवीतिना प्राङ्मुखेन ऋजुदर्भैः सयवैर्दक्षिणं जान्वाच्य सकृदञ्जलिना प्रतिनामोच्चारणं कर्तव्यम्। पितृत्वपक्षे तु दक्षिणाभिमुखःप्राचीनावीती द्विगुणभग्नकुशैः कृष्णातिलैः प्रतिनामोच्चारणमञ्जलित्रयं दद्यात्। नमइत्युच्चार्य यमन्तर्पयामि, धर्मराजं, मृत्युं, अन्तकं, वैवस्वतं, कालं, सर्वभूतक्षयं, औदुम्बरं, दध्नं, नीलं, परमेष्ठिनं, वृकोदरं, चित्रं, चित्रगुप्तं, रविं प्रत्येकं नमः शब्दमादौ कल्पयित्वा तर्पयेत्। केचन यमतर्पणं दीपावलीचतुर्दश्यामेवेच्छन्ति। अन्ये त्वङ्गारकचतुर्दश्याम्। अपरे तु कृष्णचतुर्दश्याम्। केचित्प्रतिदिनं नित्यतर्पणेऽपि। केचन देवतर्पणमध्यएवैतत्तर्पणामिच्छन्ति। केचित्पितृतर्पणानन्तरं यमतर्पणं जीवत्पितृकस्य मृतपितृकस्यापि भवतीति। एवन्तर्पयित्वा,

यमाय धर्मराजाय मृत्यवे चान्तकायच।
वैवस्वताय कालाय सर्वभूतक्षयाय च।

औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः । इति मनसा सुगुप्ताय वै नम इति जपन्नेकमञ्जलित्रयं वा दद्यात् ।

अथ संक्षेपतर्पणम् ।

आब्रह्मस्तम्बपर्यंतं जगत् तृप्यत्विति ब्रुवन् ।
जलाञ्जलित्रयं दद्यात्कुर्वन् संक्षेपतर्पणम् ॥

तीर्थादिषु तीरे वहिस्तर्पणपक्षे परिहितधौतवस्त्रस्तीरोपविष्टस्तर्पणोदकं शुचिस्थले क्षिपेत् । शुचिस्थलाभावे तु जलएव क्षिपेत् । असंस्कृतप्रमतानां तु स्थलएव तर्पणादिकं विदध्यात् । कूपाल्पनिपातादावुद्धृतजलतर्पणे पात्रएव तिलान्निक्षिप्य पितॄंस्तर्पयेत् । तर्पणोदकं तु कुशास्तृतायां भूमौ ताम्रादिपात्रे वा क्षिपेत् ।

पित्र्यं गुरुणि खड्गादिपात्रे वा तर्पणोदकं क्षिपेत् । येनैव हस्ततीर्थेन जलं समुत्सृजेत् तेनैव परिगृह्णीयात् । न तु पितॄंस्तर्पयन्नङ्गुष्ठयोगं कुर्यात् । अकृततर्पणस्तु स्नानवस्त्रं न निष्पीडयेत् । नोदके च दर्भांस्तु स्थलएव क्षिपेत् । अकृतस्नानतर्पणः स्रवन्तीन्नोल्लङ्घयेत् ।

इति तर्पणविधिः ।

तत आचम्य ब्रह्मणे विष्णवे रुद्राय सवित्रे मित्रावरुणायेति नमोन्तैः षड्भिर्मन्त्रैः पुष्पाञ्जलिना प्रत्येकं जले षट् देवताः प्रपूजयेत् । ततः सूर्याय नम इत्यूर्द्ध्वबाहुः सूर्यमुपतिष्ठेत। ततो दश दिशो दिग्देवताश्च तत्तन्नाममन्त्रैः प्रदक्षिणीकृत्य नमस्कृत्योपविशेत् । ततश्च जलमध्ये पुष्पाक्षतादिभिर्ब्रह्मणे अग्नये पृथिव्यै ओषधिभ्यो वाचे वाचस्पतये विष्णवे महते महद्भ्यो अद्भ्यः अपां पतये वरुणायेति नमोन्तैर्नाममन्त्रैरिमान्देवान् सम्पूज्य तेनैवाम्भसा त्वष्ट्रे नम इति मुखं विमृशेत् । इहायाता देवता यथास्थानं गच्छत इति विसर्जयेत् ।

ततोऽष्टदलं पद्मं चन्दनादिना समारच्य तत्र सूर्यं समावाह्य,

नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ।
जगत्सवित्रे शुचये सवित्रे कर्मदायिने ॥

इत्यादिना मन्त्रेण रक्तचन्दनाक्षतपुष्पादिभिः सम्पूज्य नमस्कृत्य ताम्रादिपात्रेणाञ्जलिना वा कुशतिलयवदूर्वारक्तचन्दनकुसुमाद्युपेतं जलमादाय,

एहि सूर्य सहस्रांशो तेजोराशे जगत्पते ।
अनुकम्पय मां देव गृहाणार्घ्यं दिवाकर ॥

इति जपन्नर्घ्यं दद्यात् ।

## अथ पूजाविधिः

तत्र पूजोपकरणानि यदि तीर्थे एव मिलन्ति तदा तत्रैव पूजा कार्या। अन्यथा स्वगृहे। तत्र तीर्थं प्रणिपत्य ब्राह्मणानभिवाद्याशुचिस्पर्शं परिहरन् उदपात्रहस्तः सोपानत्को गृहमागत्य तत्रत्यगवादिं प्रदक्षिणीकृत्य पाणिपादौ प्रक्षाल्य द्विराचम्य गृहस्य दक्षिणशाखायां धातारं उपनत्य शाखागणेशं च सम्पूज्य दक्षिणशाखायां दक्षिणहस्तेन स्पृशन् देहलीमस्पृशन् दक्षिणेनाङ्घ्रिणा प्रविश्यान्तः,

वास्तुभ्यो नमो वास्तुपतिभ्यो नमः इति सम्पूज्य गृहस्य दक्षिणस्तम्भे ब्रह्माणं वामे नृसिंहं मध्ये श्रीसूर्यं च सम्पूजयेत्। ततः शुचिः सुवस्त्रयुक् प्राज्ञो मौनी ध्यानपरायणः कामक्रोधादिरहितो यथोक्ते काले स्वस्ववाहदनायुधाद्युपेतान् सूर्यगणपतिविष्णुदेवीमहादेवान् क्रमेण पूजयेत्। तत्र शुचाववकाशे देवसंमुखमुपविश्य दक्षिणपार्श्वे पुष्पचन्दनादि वामपार्श्वे जलपूर्णकलशघण्टादि। घृतदीपश्चेद्दक्षिणतस्तैलदीपश्चेद्वामतोऽन्यानि पूजोपकरणानि यथास्थानमवस्थाप्य जलपूर्णार्घपात्रमग्रतो धृत्वा तज्जलमभिमन्त्र्य स्थानं द्रव्याणि च प्रोक्षयेत्। अभिमन्त्रणं च 'सर्वे समुद्राः' 'गङ्गे च यमुने चैव' इत्यादिना

कलशएव कार्यम्। अर्घपात्रे यथोपकल्पिते तज्जलं पूरयेत्।

तत: पीठार्च्चनम्।

आधारशक्त्यादिपीठदेवताभ्यो नमः । इन्द्रादिकालेभ्यो नमः । आदित्यादिग्रहेभ्यो नम इति सङ्क्षेपेण कुर्यात् । विस्तरस्तु आगमशास्त्राद्बोद्धव्यः ।

ततो मन्त्रन्यासमात्मनि देवे च विधाय सम्बोधनान्तदेवतानाममन्त्रेण अमुक इहागच्छ इह तिष्ठेति आवाह्यामुकायेदमासनमित्यादिप्रकारेण तत्तन्मन्त्रेणावाहनासनपाद्यार्घ्याचमनीयस्नानवस्त्रयज्ञोपवीतगन्धपुष्पधूपदीपनैवेद्यप्रणतिप्रदक्षिणविसर्जनादिषोड़शोपचारपूजां कुर्यात्। वस्त्राद्यसम्भवे मानसानप्युपचारान्परिकल्प्य जलेनापि देवमर्चयेत् । अत्रोपयुक्तेतिकर्त्तव्यताविशेषस्तत्तद्विधेरवगन्तव्यः।

नारदीये तु—

प्रातर्मध्यंदिने सायं विष्णुपूजां समाचरेत् ।
यथा संध्या स्मृता नित्या देवपूजा तथा बुधैः ॥
अशक्तौ विस्तरेणैव प्रातः सम्पूज्य केशवम् ।
मध्याह्ने च तथा सायं पुष्पाञ्जलिमपि क्षिपेत् ॥
मध्याह्ने वा विस्तरेण संक्षेपेणाथवा हरिम् ।
सम्भोज्य भोजनं कुर्यादन्यथा नरकं व्रजेत् ॥

नैमित्तिकेषु सर्वेषु तत्तत्कालं विशेषतः ।
पूजयेद्देवदेवेशं द्रव्यं सम्पाद्य यत्नतः ॥

**विष्णुधर्मोत्तरे—**

एककालं द्विकालं वा त्रिकालं पूजयेद्धरिम् ।
अपूज्य भोजनं कुर्वन्नरकाणि व्रजेन्नरः ॥ इति ।

**कालिकापुराणे—**

शिवं भास्करमग्निं च केशवं कौशिकीमपि ।
मनसाऽनर्चयन्याति देवलोकादधोगतिम् ॥ इति ।

पूजनीयपञ्चायतनदेवताश्च—

**पद्मपुराणे—**

आदित्यं गणनाथं च देवीं रुद्रं यथाक्रमम् ।
नारायणं विशुद्धाख्यमन्ते च कुलदेवताम् ॥ इति ।

अस्माच्च वचनात्प्रथमं सूर्यस्य पूजा प्रतीयते ।

**तदुक्तं ब्रह्मपुराणे—**

अपूज्य प्रथमं सूर्यं अपरान्यः प्रपूजयेत् ।
न तद्भूतकृतं पाद्यं सम्प्रतीच्छन्ति देवताः ॥

ऋग्वेदिनामेतदुपादिष्टं शूद्राणां च सम्यग्विधानानुसारेण पूर्वं गणेशस्य पूजा ततोऽर्कस्येति द्रष्टव्यम् ।

**मत्स्यपुराणे—**

आरोग्यं भास्करादिच्छेद्धनमिच्छेद् हुताशनात् ।

ज्ञानं महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥

भविष्यपुराणे—

प्रदद्याद्वै गवां लक्षं दोग्ध्रीणां वेदपारगे ।
एकाहमर्चयेद्भानुं तस्य पुण्यं ततोऽधिकम् ॥
यः सूर्यं पूजयेन्नित्यं प्रणमेद्वापि भक्तितः ।
तस्य क्षेमं च योगं च ब्रह्मस्तुष्टः प्रयच्छति ॥
यजेदेवं सहस्रांशुं मोक्षकामो न संशयः ॥ इति ।

तथा दुर्गां प्रकृत्य तत्रैव,

यः सदा पूजयेदुर्गां प्रणमेद्वापि भावतः ।
स योगी स मुनिर्धीमान् तस्य मुक्तिः करे स्थिता ॥ इति ।

तत्रैव शिवमाधिकृत्य,

यस्तु पूजयते नित्यं शिवं त्रिभुवनेश्वरम् ।
स स्वर्गराज्यमोक्षाणां क्षिप्रं भवति भाजनम् ॥

एकपाकवतामपि पृथगेव देवार्चनम् ।

तदाहाऽऽश्वलायनः—

पृथगप्येकपाकानां ब्रह्मयज्ञो द्विजन्मनाम् ।
अग्निहोत्रं सुरार्चा च संध्या नित्यं भवेत्ततः । इति ।

एतेषां च पूजाधार उक्तो नृसिंहपुराणे—

अश्वाग्रे हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् ॥

हरेरिति पूज्यप्रतिमोपलक्षणम् । अत एव शातातपः—

भूमावप्सु तथाऽग्नौ च हृदि सूर्ये च देवताः । इति ।

अप्सु देवा मनुष्याणां दिवि देवा मनीषिणाम् ॥

काष्ठलोष्ठेषु मूर्खाणां मुक्तस्यात्मनि देवताः । इति ॥

प्रतिमा कस्य कार्येत्युक्तं मत्स्यपुराणे—

सौवर्णी राजती वापि ताम्री रत्नमयी तथा ।

शैली दारुमयी वापि लोहसङ्घमयी तथा ॥

पैत्तिकी धातुयुक्ता च ताम्रकांस्यमयी तथा ।

शुभदारुमयी वाऽपि देवतार्चा प्रशस्यते ॥

लोहसङ्घमयी = समुदितधातुमयी । पैत्तिकी = पित्तलजा ।

देवतार्चा = प्रतिमा । परिमाणं चोक्तम् —

अङ्गुष्ठपर्वादारभ्य वितस्तिं यावदेति तु ।

गृहेषु प्रतिमा कार्या नाधिका शस्यते बुधैः ॥

शैलजा न गृहे पूज्या अभावात्काष्ठजा शुभा । इति ।

पद्मपुराणे—

दिवि सूर्ये तथाऽऽकाशे प्रतिमास्थण्डिलेषु च ।

समभ्यर्च्य हरिं यान्ति नरास्तद्वैष्णवं पदम् ॥

अथवा सर्वदा पूज्यो वासुदेवो मुमुक्षुभिः ।

शालिग्रामशिलाचक्रे वज्रकीटविनिर्मिते ॥

आधिष्ठानं हि तद्विष्णोः सर्वपापविनाशनम् ॥

महाकाष्ठस्थितो वह्निर्मथनाद्वै प्रकाशते ।
यथा तथा हरिर्व्यापी शालिग्रामे प्रकाशते ॥
अग्निहोत्रं हुतं तेन दत्ता पृथ्वी ससागरा ।
येनार्चितो हरिश्चक्रे शालिग्रामसमुद्भवे ॥
शालिग्रामशिलारूपी यत्र तिष्ठति केशवः ।
तत्र देवासुरा यक्षा भुवनानि चतुर्दश ॥
शालिग्रामशिला यत्र तत्तीर्थं योजनत्रयम् ।
तत्र दानं च होमं च सर्वं कोटिगुणं भवेत् ॥
शालिग्रामसमीपे तु क्रोशमात्रं समन्ततः ।
कीटकोऽपि मृतो याति तद्विष्णोः परमं पदम् ॥
शालिग्रामशिलायां तु यः श्राद्धं कुरुते नरः ।
पितरस्तस्य तिष्ठन्ति तृप्ताः कल्पशतं दिवि ॥
शालिग्रामशिलाचक्रे यो दद्याद्दानमुत्तमम् ।
भूचक्रं तेन दत्तं स्यात्सशैलवनकाननम् ॥
शालिग्रामशिलायां यो मूल्यमुद्भावयेद्द्विजः ।
विक्रेता चानुमन्ता च यः परीक्ष्यानुमोदयेत् ॥
सर्वे ते नरकं यान्ति यावदाभूतसम्प्लवम् ।
अतः संवर्जयेद्वैश्यश्चक्रस्य क्रयविक्रयम ॥

स्कन्दपुराणे—

शालिग्रामशिलायास्तु प्रतिष्ठाने च विद्यते ।

महापूजां तु कृत्वादौ पूजयेत्तां ततो बुधः ॥
शालिग्रामार्चने नैव आवाहनविसर्जने ।
शालिग्रामे हि भगवानाविर्भूतो यथा हरिः ॥
न तथात्र तु सूर्यादौ वैकुण्ठेपि च सर्वगः ।

नन्दिपुराणे—

स्थिरलिङ्गेऽनले तोये हृदये सूर्यमण्डले ।
आवाहनादि चत्वारि कुर्यान्नोद्वासनन्तथा ॥ इति ।

भविष्यपुराणे—

बाणलिङ्गानि राजेन्द्र ख्यातानि भुवनत्रये ।
न प्रतिष्ठा नसंस्कारस्तेषामावाहनं तथा ॥
एवमेव प्रपूज्यानि शिवरूपाणि भावतः । इति । तथा,
गृहे लिङ्गद्वयं नार्च्यं गणेशत्रितयं तथा ।
शक्तित्रयं तथा शङ्खमत्स्यादिदशकं तथा ॥
द्विचक्रे द्वारकायास्तु नार्च्यं सूर्यद्वयं तथा ।
एतेषां पूजनान्नित्यं उद्वेगं प्राप्नुयाद् गृही । इति ॥

तत्र देवतास्थापनप्रकार उक्तः संग्रहे—

शम्भौ मध्यगते हरीनहरभूदेव्यो हरौ शङ्करे—
भास्येनागसुता रवौ हरगणेशाजाम्बिकाःस्थापिताः ॥
देव्यां विष्णुहरैकदन्तरवयो लम्बोदरेजेश्वरे—
नाम्बाः शङ्करभागतस्तु शुभदा व्यस्तास्तु हानिप्रदाः ॥

तत्र पूजोपचारेषु नानात्वं दृश्यते । पञ्च । दश । षोडशाष्टादशेति ।

पञ्च यथा—

गन्धादयो नैवेद्यान्ताः पूजा पञ्चोपचारिकी ।

दश यथा—

अर्घ्यपाद्याचमनकमधुपर्काचमनान्यपि ।
गन्धादयो नैवेद्यान्ता उपचारा दश क्रमात् ॥

षोडश यथा—

आसनं स्वागतं चार्घ्यं पाद्यमाचमनीयकम् ।
मधुपर्कासनस्नानवसनाभरणानि च ॥
सुगन्धसुमनोधूपदीपनैवेद्यचन्दनम् ।
प्रयोजयेदर्चनायामुपचारांश्च षोडश ॥

अष्टादश यथा—

आसनावाहने चार्घ्यं पाद्यमाचमनं तथा ।
स्नानं वस्त्रोपवीतं च भूषणानि च सर्वशः ॥
गन्धपुष्पं तथा धूपं दीपमन्नेन तर्पणम् ।
माल्यानुलेपने चैव नमस्कारविसर्जने ॥ इति ।
एतच्च काम्यपूजाविषये यथासङ्कल्पं नियतम् ।
नित्यपूजायां तु न नियमः ॥

भविष्यपुराणे—

शुचिः सुवस्त्रयुक् स्नातो मौनी ध्यानपरायणः ।
गतकामभयद्वंद्वो रागमात्सर्यवर्जितः ॥
आत्मानं पूजयित्वा च सुगन्धिवासितवाससा ।
सुमुहूर्त्ते यजेद्देवान् स्वकीयासनसंस्थितान् ॥

देवीपुराणे—

रक्तविल्वाक्षतैः पुष्पैर्दधिदूर्वायवैस्तिलैः ।
सामान्यः सर्वदेवानामर्घ्योऽयं परिकीर्त्तितः ॥
अभावे दधिदूर्वादेर्मनसा सम्प्रकल्पयेत् ॥
रक्तं कुङ्कुमम् ।

भविष्ये—

अष्टाङ्गमर्घ्यमापूर्य भानोर्मूर्द्ध्नि निवेदयेत् ।
दशवर्षसहस्राणि स वसेदर्कसंनिधौ ॥

अष्टाङ्गान्यप्युक्तानि—

आपः क्षीरं कुशाग्राणि घृतं दधि तथा मधु ।
रक्तानि करवीराणि तथा रक्तं च चन्दनम् ॥
अष्टाङ्ग एवार्घ्योऽयं वै ब्रह्मणा परिकीर्त्तितः ।

दुर्गायां तु—

आपः क्षीरं कुशाग्राणि अक्षता दधितण्डुलाः ।
सह सिद्धार्थका दूर्वाः कुङ्कुमं रोचना मधु ।

अर्घ्योऽयं कुरुशार्दूल द्वादशाङ्ग उदाहृतः ॥

स्कन्दपुराणे—

शङ्खस्थितेन तोयेन यः स्नापयति केशवम् ।
कपिलायाः सहस्रस्य फलं प्राप्नोति मानवः ॥
शङ्खे तीर्थोदकं कृत्वा यः स्नापयति केशवम् ।
कपिलायाः सहस्रस्य फलं प्राप्नोति मानवः ॥
विन्दुमात्रेण द्वादश्यां कुलानां तारयेच्छतम् ॥
कपिलाक्षीरमादाय शङ्खे कृत्वा जनार्दनम् ।
यज्ञायुतसहस्रस्य स्नापयित्वा लभेत्फलम् ॥
सतिलं कुसुमोपेतं शङ्खे तोयं सचन्दनम् ।
कृत्वा यः स्नापयेद्देवं मम लोके चिरं वसेत् ॥
क्षिप्त्वा गन्धादिकं शङ्खे यः स्नापयति माधवम् ।
नमो नारायणायेति मुच्यते योनिसङ्ग्रहात् ॥
शङ्खलग्नं तु यत्तोयं भ्रामितं केशवोपरि ।
वन्दते शिरसा नित्यं गंगास्नानेन तस्य किम् ॥
कृत्वा पादोदकं शङ्खे वैष्णवानां महामुने ।
यो ददाति तिलैर्मिश्रं चान्द्रायणफलं लभेत् ॥
नार्घं तड़ागजं वापि वापीकूपदाह्रदादिजम् ।
गाङ्गेयं भवते सर्वमेवमाह जनार्दनः ॥
गृहीत्वा विष्णुपादोदं शंखे कृत्वा तु वैष्णवः ।

यो वहेच्छिरसा नित्यं स मुनिस्तपतां वरः ॥
त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया ।
शंखे तिष्ठन्ति विप्रेन्द्र तस्माच्छंखं सदार्चयेत् ॥
पुरतो देवदेवस्य सपुष्पं सजलाक्षतम् ।
शंखमभ्यर्चयेन्नित्यं तस्य लक्ष्मीरदूरगा ॥
विलेपयन्ति देवेशं शंखे कृत्वा तु चन्दनम् ।
परमात्मा परां प्रीतिं ददाति शतवार्षिकीम् ॥
अर्घ्यं कृत्वा तु शंखे वै यः करोति प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥
भ्रामयित्वा हरेर्मूर्ध्नि मन्दिरं शंखवारिणा ।
प्रोक्षयेद्वैष्णवो यस्तु नाशुभं तद्गृहे भवेत् ॥

स्नानकाले घण्टावादने फलमाह तत्रैव—

स्नानार्चनक्रियाकाले घण्टानादं करोति यः ।
पुरतो वासुदेवस्य तस्य पुण्यफलं शृणु ॥
वर्षकोटिसहस्राणि वर्षकोटिशतानि च ।
चरते देवलोके तु अप्सरोगणसेवितः ॥
सर्वनादयमयी घण्टा सर्वदेवस्य वल्लभा ।
वादनाल्लभते पुण्यं यज्ञकोटिशतोद्भवम् ॥
वल्लकीनिनदैरुच्चैर्गीतमङ्गलसम्भवैः ।
यः स्नापयति देवेशं जीवन्मुक्तो भवेद्धि सः

दृष्ट्वा शंखोदकं मूर्ध्नि पूजाकाले तु सर्वदा ।
घण्टानादो द्विजैः कार्यः सर्ववाद्यमयी तथा ॥
मन्वन्तरसहस्राणि मन्वन्तरशतानि च ।
घण्टानादेन देवेशः प्रीतो भवति केशवः ॥

तथा,

वेणुवीणास्वनेनैव यः स्नापयति केशवम् ।
युवतीगीतयोगेन स याति गुरुयोग्यताम् ॥
मृदङ्गवाद्येन युतं प्रणवेन समन्वितम् ।
अर्चनं वासुदेवस्य यन्नित्यं मोक्षदं नृणाम् ॥
गीतं वाद्यं च नृत्यं च तथा पुस्तकवाचनम् ।
पूजाकाले तु विप्रेन्द्र सर्वदा केशवप्रियम् ॥

अथ शिवमधिकृत्य कालिकापुराणे—

कपिलापञ्चगव्येन कुशवारियुतेन वा ।
स्नापयेन्मन्त्रपूतेन ब्राह्मं स्नानं तदुच्यते ॥
एकाहमपि यो लिङ्गे ब्राह्मं स्नानं समाचरेत् ।
विधूय सर्वपापानि रुद्रलोके महीयते ॥
कपिलापञ्चगव्येन दधिक्षीरयुतेन वा ।
स्नानं शतगुणं पुण्यमितरेभ्यो न संशयः ॥
वर्षकोटिसहस्रेण यत्पापं समुपार्जितम् ।
घृतस्नानेन तत्सर्वं दहत्यग्निरिवेन्धनम् ॥

कृष्णाष्टम्यां घृतस्नानं कृत्वा लिङ्गे सकृन्नरः ।
कुलैकविंशमुत्तार्य शिवलोके महीयते ॥
स्नाप्य दध्ना सकृल्लिङ्गं शिवलोकेऽभिपूजके ।

ब्रह्मपुराणे—

देवानां प्रतिमा यत्र घृताभ्यङ्गसमा भवेत् ।
पलानि तस्मै देयानि श्रद्धया पञ्चविंशतिः ॥
अष्टोत्तरं पलशतं स्नानं देयं च सर्वदा ।
द्वे सहस्रे पलानां च महास्नाने च सक्रया(?) ॥
दातव्यं येन सर्वासु दिक्षु निर्याति तद् घृतम् ।

अथ वस्त्रम् ।

तत्र विष्णुः—

वासो न नीलरक्ते दद्यादित्यनुषङ्गः ।

अग्निपुराणे—

दुकूलपट्टकौशेयवार्क्षकार्पासकादिभिः ।
वासोभिः पूजयेद्देवं स्वशुभैरात्मनः प्रियैः ॥
अङ्गलग्नं च जीर्णं च वस्त्रं देवे न दापयेत् ।
प्राप्नोति नरकान् घोरान् दत्त्वा मूढो नराधमः ॥

अथ गन्धः ।

तत्र विष्णुमधिकृत्य नरसिंहपुराणे—

कुङ्कुमागुरुश्रीखण्डचन्दनैरच्युताकृतिम् ।

आलिप्य भक्त्या राजेन्द्र कल्पकोटिं वसेद्दिवि ।

अग्निपुराणे—

चन्दनागुरुकर्पूरकुङ्कुमोशीरपद्मकैः ।
अनुलिप्तो हरिर्भक्त्या वरान् भोगान् प्रयच्छति ॥
कालेयकं तरोर्मुष्कं रक्तचन्दनमेव च ।
नृणां भवति पुण्यानि दत्तानि पुरुषोत्तमे ॥

शिवे तु तत्रैव—

चन्दनाद्यागुरौ ज्ञेयं पुण्यमष्टगुणं नृप ।
कृष्णागुरोर्विशेषेण द्विगुणं फलमाविशेत् ॥
तस्माच्छतगुणं पुण्यं कुङ्कुमे च विधीयते ।
चन्दनागुरुकर्पूरश्लक्ष्णपिष्टैः सचन्दनैः ॥
शिवस्यार्चां समालिप्य कल्पकोटिं वसेद्दिवि ।

अर्चा प्रतिमा ।

अथ धूपः ।

तत्र विष्णोर्वामनपुराणे—

तुहिकाख्यं कणं दारु सिंहकं सागरं सितम् ॥
शङ्खं जातीफलं श्रीशे धूपानि स्युः प्रियाणि वै ।

तुहिका मांसी । कणं गुग्गुलुविशेषः । दारुर्देवदारुः । शङ्खं नखी ।

नरसिंहपुराणे—

महिषाक्षं गुग्गुलुं च आज्ययुक्तं सशर्करम् ।
धूपं ददाति राजेन्द्र नरसिंहाय भक्तिमान् ॥
सधूपितः सर्वदिक्षु सर्वपापविवर्जितः ।
अप्सरोगणयुक्तेन विमानेन विराजते ।
वायुलोकं समासाद्य विष्णुलोके महीयते ।

विष्णुः—

न धूपार्थं जीवजातमिति । जवोत्थं कस्तूर्यादि धूपे न देयमित्यर्थः । सूर्ये दुर्गायां चायमेव धूपः ।

शिवपुराणे—

गुग्गुलुं घृतसंयुक्तं शिवे यश्च निवेदयेत् ।
रुद्रलोकमवाप्नोति गाणपत्यं च विन्दति ॥

भविष्यपुराणे—

दधित्थं घृतसंयुक्तं दग्धबिल्वमथापि वा ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ।

दधित्थं कपित्थम् ।

अथ दीपः ।

तत्र विष्णुस्मृतौ—

न घृतं तैलं विना दीपार्थे इति । दद्यादिति शेषः ।

नरसिंहपुराणे—

घृतेन वाऽथ तैलेन दीपं यो ज्वालयेन्नरः ।
वैष्णवो विधिवद्भक्त्या तस्य पुण्यफलं शृणु ॥
विहाय सकलं पापं सहस्रादित्यसन्निभः ।
ज्योतिष्मता विमानेन विष्णुलोके महीयते ॥

भविष्यपुराणे—

घृतदीपप्रदानेन शिवाय शतयोजनम् ।
विमानं लभते दिव्यं कोटिसूर्यसमप्रभम् ॥

तथा दीपसामान्याधिकारे,
तांश्च दद्यान्न हिंसेत न च तैलेन वर्जितान् ॥
कुर्वीत दीपहन्ता च मूषकोऽजश्च जायते ।
तैलेनेति घृतस्याप्युपलक्षणम् ॥
तेन दीपपात्रस्थं घृतं तैलं वा नोद्धर्त्तव्यम् ।

अथ नैवेद्यम् ।

तत्र वराहपुराणे—

ये ममैवोपयोज्या हि गव्यं दधि पयो घृतम् ।
माहिषं चाविकं छागमयज्ञियमुदाहृतम ॥
अयज्ञियमिति । अनेन वैष्णवेन न देयमित्युक्तम् ।
तत्र माहिषं दध्येव विष्णौ निषिद्धं न दुग्धम् ॥

तथा च विष्णुः—

नाभक्ष्यं नैवेद्यार्थे भक्ष्येप्यजामहिषीक्षीरे ।
पञ्चनखमत्स्यवराहमांसानि दद्यादिति शेषः ॥

वाराहे—

मार्गं मांसं तथा छागं शाशं समनुयुज्यते ।
एतानि मे प्रियाणि स्युः प्रयोज्यानि वसुन्धरे ॥

अग्निपुराणे—

भक्ष्याणि यानि देयानि भक्ष्याण्यभिमतानि च ।
फलं च वल्लभं यच्च तच्च देयं जनार्दने ॥

सूर्यदुर्गयोस्तु—

संयावकृशरापूपपायसं गुड़मोदकाः ।
रसालाः शालयः प्रस्थं षष्टिकौदनमेव च ॥
यवगोधूममुद्गाश्च माषमांसतिलादयः ।
पानकानि सुपक्वानि फलानि च निवेदयेत् ॥

शिवमधिकृत्य भविष्यपुराणे—

गुड़खण्डघृतानां च भक्ष्याणां च निवेदनैः ।
घृतेन पाचितानां तु तेषां शतगुणं फलम् ॥
तथा, मातुलिङ्गफलाढ्यानि सुपक्वानि निवेदयेत् ।
शिवाय यत्फलं तस्य तद्भक्ष्याणां निवेदने ॥

नैवेद्यपात्रं तु—

सौवर्णं राजतं ताम्रं कांस्यं पालाशपत्रजम् ।
नैवेद्यायाब्जपत्रं च पात्रं विष्णोरतिप्रियम् ॥

प्रदक्षिणे विशेष उक्तो हि परिशिष्टे—

एकं विनायके कुर्यात् द्वे सूर्ये त्रीणि शङ्करे ।
चत्वारि केशवे दद्यात्सप्ताश्वत्थे प्रदक्षिणाः ॥

अन्यत्र पठ्यते—

एका चण्ड्यां रवेरष्ट तिस्रो दद्याद्विनायके ।
चतस्रो विष्णवे देयाः शिवस्यार्द्धप्रदक्षिणम् ॥

आदित्यपुराणे—

प्रदक्षिणत्रयं कुर्याच्छिवस्यायतने नरः ।
अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ॥

लिङ्गपुराणे—

सव्यं व्रजेत्ततोऽपसव्यं प्राणान्तं नैव लङ्घयेत् ।

बृहन्नारदीये—

शिवप्रदक्षिणे मर्त्यः सोमसूत्रं न लङ्घयेत् ।

तथा—

अपसव्यं यतिः कुर्यात् सव्यं तु ब्रह्मचारिणः ।
सव्यापसव्यं गृहिणा नित्यं शंभोः प्रदक्षिणम् ॥
तृणैः काष्ठैस्तथा पद्मैः पाषाणैर्वेष्टकादिभिः ।

अन्तर्द्धानं पुरः कृत्वा सोमसूत्रं तु लङ्घयेत् ॥
तथा, जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः ।
कृत्वा प्रणामं सर्वेशे सर्वान्कामानवाप्नुयात् ॥

नारदीये—

एकोऽपि कृष्णस्य कृतः प्रणामो
दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म
कृष्णप्रणामी न पुनर्भवाय ॥

भविष्यपुराणे सूर्यमाधिकृत्य--

प्रणम्य दण्डवद् भूमौ नमस्कारेण योऽर्चयेत् ।
स यां गतिमवाप्नोति न तां क्रतुशतैरपि ॥

तथा, देवीमधिकृत्य—

सर्वयज्ञोपवासेषु सर्वतीर्थेषु यत्फलम् ।
तत्फलं लभते वीर प्रणम्य शिरसा सतीम् ॥
संप्रसारितदेहो यो दण्डवत्प्रणतो भुवि ।
चण्डिकापुरतो वीर स याति परमां गतिम् ॥

नमस्कारे विशेषं पठान्ति ।

अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे ॥
जपहोमनमस्कारान्न कुर्याद् देवतालये ।
अग्रे मृत्युमवाप्नोति पृष्ठे त्वपचयः स्मृतः ॥

वामभागे भवेन्नाशो दक्षिणे सर्वकामदः ।
शिवे त्वग्रेऽपि—
पशोः पशुपतेरग्रे दण्डवत्पतितो भुवि ।
पतन्ति पातकाः सर्वे नोत्तिष्ठन्ति तदा सह । इति स्मृतेः ॥

अथ निर्माल्यलङ्घने निषेधो नरसिंहपुराणे—शान्तरथं प्रति नारदः—
अतः प्रभृति निर्माल्यं मा लङ्घय महामते ।
नरसिंहस्य देवस्य तथाऽन्येषां दिवौकसाम् ॥
भविष्यपुराणेऽपि—
यथा न लङ्घयेत्कश्चित् स्नपनं भास्करस्य तु ।
तथा कार्यं प्रयत्नेन लङ्घितं ह्यशुभावहम् ॥
तामिस्रं नरकं कर्त्ता लङ्घयेत्तु सरौरवम् ।

निर्माल्यप्रति(पत्ति)रुक्ता ब्रह्मपुराणे—
ब्रह्माङ्गलग्नं विप्रेभ्यो वैष्णवं च प्रदीयते ।
रुद्राङ्गलग्नमग्नौ तु दहेत्सर्वं धृतं क्षणात् ।
शिष्टेभ्यस्त्वथ देवेभ्यो यत्तु दानेषु निःक्षिपेत् ।
विप्रेभ्यस्त्वथ तद्देयं ब्रह्मणे यन्निवेदितम् ।
वैष्णवं सात्वतेभ्यश्च भस्माङ्गेभ्यश्च शाम्भवम् ।
सौरं खगेभ्यः शाक्तेभ्यः स्वामिने यन्निवेदितम् ।
स्त्रीभ्यश्च देयं मातृभ्यो यत्तु किंचिन्निवेदितम् ॥

भूतप्रेतपिशाचेभ्यो यत्तु दानेषु तत् क्षिपेत् ॥

घृतमिति दुग्धादरेप्युपलक्षणम् । सात्वतः पूजाकारः । स्वामिने बुद्धाय । पूर्वत्र स्नानीयघृतादिप्रतिपत्तिरुक्ता । विप्रेभ्य इत्यादिना नैवेद्यप्रतिपत्तिरिति विवेकः ।

बह्वृचपरिशिष्टे—

पवित्रं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतम् ।
शिवनिर्माल्यभोक्तारः शिवनिर्माल्यलङ्घकाः ।
शिवनिर्माल्यदातारः स्पर्शस्तेषां हि पुण्यहृत् ॥

पाद्मे—

द्रव्यमन्नं फलं तोयं शिवस्व न स्पृशेत् क्वचित् ।
लङ्घयन्नैव निर्माल्यं पतते नरके नरः ।
शिवैकभक्तानां न निषेधः ॥

पादोदकं च निर्माल्यं भक्तैर्धार्यं प्रयत्नतः ॥

इत्यग्निपुराणात् ।

आदित्यपुराणे—

निर्माल्यं धारयेद्भक्त्या शिरसा पार्वतीपतेः ।
राजसूयस्य यज्ञस्य फलमाप्नोति निश्चितम् ॥
लोभादिना तु न धार्यम् ।
लोभान्न धारयेच्छंभोर्निर्माल्यं न च भक्षयेत् ॥

न स्पृशेदपि पादेन लङ्घयेन्नापि नारद । इति ।
सर्वैरपि चण्डांशं दत्वैव धार्यम् ॥

क्वचिच्चण्डांशाऽभावोऽप्युक्तोऽग्निपुराणे—
बाणलिङ्गे चले लोहे सिद्धलिङ्गे स्वयंभुवि ।
प्रतिमासु च सर्वासु न चण्डोधिकृतो भवेत् ॥

येषु चण्डाधिकारो नास्ति तेषु निर्माल्यधारणे न दोष इत्याहुः ।

शालिग्रामसंसर्गेतु सर्वैरपि सर्वेषामपि सेवनीयम् ।

तथा च स्कन्दपुराणे—
अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् ।
शालिग्रामस्य संसर्गात्सर्वं याति पवित्रताम् । इति ॥

भविष्यपुराणे—
मुकुन्दाशनशिष्टं तु भुङ्क्ते यस्तु दिने दिने ।
सिक्थे सिक्थे भवेत्पुण्यं चान्द्रायणशताधिकम् ॥

वाराहे—
शालिग्रामशिलातोयमपीत्वा यस्तु मस्तके ।
प्रक्षेपणं प्रकुर्वीत ब्रह्महा स निगद्यते ॥
दीपार्चिश्च तथा धूपं कराभ्यां यैर्नमस्कृतम् ।
सप्तजन्मार्जितं पापं तत्क्षणादेव नश्यति ॥

पार्थिवलिङ्गपूजाप्रकार उक्तो भविष्यपुराणे—

यः कृत्वा पार्थिवं लिङ्गं पूजयेच्छुभवेदिकम् ।
इहैव धनवान् श्रीमानन्ते रुद्रोऽभिजायते ॥
हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ।
पशुपतिः शिवश्चैव महादेवेति विसर्जयेत् ॥
मृत्तिकाग्रहणे चैव घटने च प्रतिष्ठने ।
आवाहने च स्नपने पूजने च विसर्जने ॥
हरादीनि महादेवान्तानि नामानि कीर्त्तयेत् ।

अष्टमूर्त्तिपूजाप्रकारस्तु भविष्यपुराणे—

विष्णुः—

साधु साधु द्विजश्रेष्ठ साधु पृष्टोऽस्मि सुव्रत ।
शृणुष्व गदतः सर्वं शिवमन्त्रगणं परम् ॥

शर्वाय क्षितिमूर्त्तये नमः । भवाय जलमूर्त्तये नमः। रुद्रायाग्निमूर्त्तये नमः । उग्राय वायुमूर्त्तये नमः। भीमायाकाशमूर्त्तये नमः । पशुपतये यजमानमूर्त्तये नमः । महादेवाय सोममूर्त्तये नमः । ईशानाय सूर्यमूर्त्तये नमः ।

मूर्त्तयोऽष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः ।
आग्नेयान्ताः प्रयोज्यास्तु वेद्यां लिङ्गे शिवं यजेत् ॥

नमः शिवायेति मंत्रेण पूर्वं लिङ्गे शिवं प्रपूज्य

ततो वामावर्त्तेनाष्टौ मूर्त्तीः पूजयेदित्यर्थः ।

अथामलकमात्रं तु कृत्वा लिङ्गं हिरण्मयम् ।
सम्पूज्य रत्नघटितं शिवलोके महीयते ॥
मृद्भस्मगोशकृत्पिष्टताम्रकांस्यमयं च वा ।
कृत्वा लिङ्गं सकृत्पूज्य वसेत्कल्पायुतं दिवि ॥

देवीपुराणे—

वासं वित्तप्रदं लिङ्गं स्फाटिकं सर्वकामदम् ।
नर्मदागिरिजं श्रेष्ठमन्यद्वाऽपि हि लिङ्गवत् ॥
कृत्वा पूजय विप्रेन्द्र लप्स्यसे विहितं फलम् ।

आदित्यपुराणे—

शैलजं बाणलिङ्गं तु पूजयेद्विधिवत्सदा ।
मृद्धातुघटितं वाऽपि रसजं वा गृहाश्रमी ॥

नन्दिपुराणे—

त्रिकोणं फलकाकारं शूलाग्रं झर्झरं नतम् ।
कपिलं वाऽपि यल्लिङ्गं तद् गृहस्थो न पूजयेत् ॥

तथा—

दीक्षितानां द्विजान्येषां स्त्रीणामपि तथैव च ।
लिङ्गे स्वे गुरुणा दत्ते पूजा नान्यत्र चोदिता ॥

अथ पुष्पाणि ।

तत्र नरसिंहपुराणे—

पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः ।

अपर्युषितानिःछिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ॥
आत्मारामोद्भवैर्वापि पुष्पैः सम्पूजयेद्धरिम् ।

विहितपुष्पादि तु गोविन्दार्णवे द्रष्टव्यम् । निषिद्धानि तूच्यन्ते ।

तत्र विष्णौ वर्ज्यानि—

कुकराख्यस्य पुष्पाणि तथा धत्तूरकस्य च ।
कृष्णस्य कुटजं वार्कं नैव देयं जनार्दने ॥

कुकरः करवीरः । करीर इत्यन्ये ।

शाल्मलं च शिरीषं च बृहती गिरिमाल्लिका ॥
सर्जकं चैव कूष्माण्डं कणारं च विवर्जयेत् ।

वामनपुराणे—

सुरभीनि तथाऽन्यानि वर्जयित्वा तु केतकीम् ।

इति विष्णौ केतकीनिषेधो नरसिंहमूर्त्तौ काम्यपूजायां वा द्रष्टव्यः । पूर्वत्र विधेर्दर्शितत्वात् ।

विष्णुः—नोग्रगन्धि पुष्पं नागन्धि न कण्टकिजम् ।

कण्टकिजमपि शुक्लं सुगन्धि दद्यात् । न रक्तं दद्यात् । रक्तमपि कुङ्कुमजं च दद्यात् ।

शिवे वर्ज्यानि । भविष्यपुराणे—

केतकी चातिमुक्तं च कुन्दा यूथी मदन्तिका ।
शिरीषसर्जबन्धूककुसुमानि विवर्जयेत् ॥

अङ्कोलपत्रकुसुमं करञ्जेन्द्रतरूद्भवम् ।
बिभीतकानि धन्वानि कुसुमानि विवर्जयेत् ।
निर्गन्धान्युग्रगन्धीनि कुसुमानि विवर्जयेत् ॥
गन्धहीनमपि ग्राह्यं पवित्रं च कुशादिकम् ।
इन्द्रतरुः सिन्दुवारः ॥

प्रासाददीपिकायाम्—

जपाबन्धूकसिन्दूरं तथा त्रैसन्धिके शुभे ।
मदन्ती केतकी यूथी मालतीमुरजानि च ॥
घुसृणं वाऽश्वमारं च प्रमादेनापि नार्पयेत् ।
बर्बरी सर्जपत्री च तथा च कुमुदद्वयम् ॥
अतिपक्वान्यपक्वानि पतितानि विवर्जयेत् ।
आरण्यान्युग्रगन्धीनि सकीटं चोग्रगन्धि यत् ॥
अशुद्धपत्रपाण्यङ्गवासोभिः कुत्सितात्मभिः ।
आनीतं नार्पयेच्छम्भोः प्रमादादपि दोषकृत् ॥
सूर्ये वर्ज्यानि ।

भविष्यपुराणे—

कृष्णलोन्मत्तकं काञ्ची तथा च गिरिकर्णिका ।
न कण्टकारिकापुष्पं तथाऽन्यद्गन्धवर्जितम् ॥
न चाम्रातकजैः पुष्पैरर्चनीयो दिवाकरः ।
तथा, येषां न प्रतिषेधोऽस्ति गन्धवर्णान्वितानि च ॥

तानि पुष्पाणि देयानि भानवे ऽलीकभानवे ।

देवीमधिकृत्य देवीपुराणे—

मुकुलैर्नार्चयेद्देवीमपक्वं न निवेदयेत् ।

फलं कथितपक्वं चाऽकालपक्वं च वर्जयेत् ॥

शिवे विवर्जयेत्कुन्दमुन्मत्तं च तथा हरेः ।

देवीनामर्कमन्दारौ सूर्यस्य तगरन्तथा ॥

अत्र, बकुलैश्चैव मन्दारैः कुन्दपुष्पैः शिरीषकैः ।

करवीरार्कपुष्पैश्च शांशपैश्चापराजितैः ॥

इत्यादिना देव्यामर्कमन्दारयोर्विधानाद्देवीनामर्कमन्दाराविति निषेधो दुर्गेतरविषय उन्नेयः ।

एवम्, कुञ्जकस्तगरश्चैव कर्णिकारः कुरण्टकः ।

इति भविष्यपुराणे सूर्ये तगराविधानात्सूर्यस्य तगरं तथेति निषेधो वनतगरविषयः । विहितप्रतिषिद्ध इत्यपरे । अत्र पूजायां प्रथमं विहितम् । तदभावे विहितप्रतिषिद्धम् । तदलाभे अविहितानिषिद्धं च पुष्पादि देयमिति शास्त्रार्थः ।

## अथापराधाः ।

वाराहे—द्वात्रिंशत्तत्र मुख्यास्ते वाराहे विष्णुनोदिताः ।

तिर्यक् पुण्ड्रधरो भूत्वा ह्यकृत्वा देवतार्चनम् ॥

याचितैः पत्रपुष्पाद्यैर्यः करोति ममार्चनाम् ।

अप्रक्षालितपादो यः प्रविशेन्मम मन्दिरम् ॥
मम दृष्टेरभिमुखं ताम्बूलं चर्वयेच्च यः ।
कौसुम्भशाकं मर्त्यो यो भक्षयेन्मम सेवकः ॥
कुरुवकपलाशस्थैः पुष्पैः कुर्यान्ममार्चनम् ।
ममार्चामासुरे काले यः करोति विमूढधीः ।
अवैष्णवस्य पक्वान्नं यो मह्यं विनिवेदयेत् ।
अवैष्णवेषु पश्यत्सु मत्पूजां विदधाति यः ।
दिनान्तरितपक्वान्नं यो मह्यं विनिवेदयेत् ॥
नीलीरञ्जितवस्त्रं यन्मर्त्यो मह्यं निवेदयेत् ।
नवमक्षालितं वस्त्रं जीर्णं यन्मे निवेदयेत् ॥
अमौनी घर्मलिप्ताङ्गो मत्पूजां विदधाति यः ।
वातमूत्रनिरोधेन मत्पूजां विदधाति यः ॥
नखोदकेन स्नपनं कुरुते मम मानवः ॥
कृत्वा वातमनाचम्य तथा प्रावृतकम्बलः ।
पीठासनोपविष्टस्तु पूजयेद्वा निरासनः ॥
मृन्मये धूपदहनं प्रदीपं कुरुते नरः ।
मत्पूजको न कुरुते तन्तुपूजां च दामनीम् ।
मत्पूजकः शिवद्वेषी मद्भक्तश्च शिवाधमः ॥
भूताष्टम्यां न कुरुते नक्तं न हरिवासरम् ।
परस्य परिधानं यत्परिधार्यार्चयेच्च माम् ॥

अपूजयित्वा विघ्नेशं सम्भाव्य च कपालिनम् ।
क्रुद्धो यत्कर्म कुरुते त्रिकालार्चनविघ्नकृत् ॥
अन्धकारे स्पृशेन्मर्त्यः सम्भाष्य च रजस्वलाम् ।
वामहस्ते च मां कृत्वा स्नापयेद्यदि मूढधीः ॥
महापराधान् जानीहि द्वात्रिंशन्नक्षमामितान् ।
अन्येऽप्यगस्तिना उक्ताः—
यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे ।
देवोत्सवाद्यसेवा च अप्रणामस्तदग्रतः ॥
उच्छिष्टे चैव चाशौचे भगवद्वन्दनादिकम् ।
एकहस्तप्रणामश्च यः पुरस्तात्प्रदक्षिणम् ॥
पादप्रसारणं चाग्रे तथा पर्यङ्कबन्धनम् ।
शयनं भक्षणं चैव मिथ्याभाषणमेव च ।
कम्बलावरणं चैव परनिन्दा परस्तुतिः ।
अश्लीलभाषणं चैव मिथ्याभाषणमेव च ।
(अधोवायुविमोक्षणम्)
विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनादिके ।
शक्तौ गौणोपचारस्तु अनिवेदितभक्षणम् ॥
तत्तत्कालोद्भवानां च फलादीनामनर्पणम् ।
पृष्ठे कृत्वाऽऽसनं चैव परेषामभिवादनम् ॥
गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा ।

अपराधा इमे विष्णोर्द्वात्रिंशत्परिकीर्त्तिताः ॥

अत्रापरो विशेषस्तत्तत्पुराणागमकल्पेभ्योऽवसेयः । विस्तरभयान्न लिख्यते ।

अथ पञ्च महायज्ञाः ।

वातमूत्रनिरोधेन मत्पूजां विदधाति यः ।

तत्र ब्रह्मयज्ञतर्पणे दर्शिते । इदानीं वैश्वदेवः ।

तत्र नरसिंहपुराणे—

पौरुषेण तु सूक्तेन ततो विष्णुं समर्चयेत् ।
वैश्वदेवं ततः कुर्याद्बलिकर्म तथैव च ॥

वैश्वदेवं देवयज्ञः । बलिकर्म भूतयज्ञः ।

वसिष्ठे—

पितृभ्यो दद्यात्ततोऽतिथीन् भोजयेदिति ।

एतेन भूतयज्ञानन्तरं पितृयज्ञस्ततो मनुष्ययज्ञ इति क्रमो बोद्धव्यः । एते पञ्च महायज्ञाः शूद्रस्याप्यावश्यकाः ।

भार्यारतः शुचिर्भृत्यभर्ता श्राद्धक्रियापरः ।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत् ॥

इति शूद्रमधिकृत्य याज्ञवल्क्येनाभिधानात् ।

दानं दद्याच्च शूद्रोऽपि पाकयज्ञैर्यजेत्ततः ॥

इति विष्णुपुराणवचनाच्च ।

व्यासः—

जुहुयात्सर्पिषाऽभ्यक्तं तैलक्षारविवर्जितम् ।
दध्यक्तं पयसाक्तं वा तदभावेऽम्बुनापि वा ॥

गृह्यपरिशिष्टे—

शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम् ।
सङ्कल्प्यते य आहारस्तेन च जुहुयादिति ।
तेषां पञ्चानामपि अनुष्ठानाशक्तावाह गौतमः—

नित्यं स्वाध्यायः पितृभ्यश्चोदकदानं यथोत्साहमन्नादितर्पणं ब्रह्मयज्ञश्चेति द्वयमावश्यकमित्यर्थः ।

व्यासः—

वैश्वदेवं प्रकुर्वीत स्वशाखाविहितं ततः ।
संस्कृतान्नैर्हि विविधैर्हविष्यव्यञ्जनान्वितैः ॥
तैरेवान्नैर्बलिं दद्याच्छेषमाप्लाव्य वारिणा ।
कृतापसव्यः स्वधया सर्वं दक्षिणतो हरेत् ॥

तत इति । देवतार्चनानन्तरम् ।

कात्यायनः—

अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयादिति ।

---

(१) शौनक इति वा आश्वलायन इति वा इत्युचितं प्रतिभाति । आश्वलायनगृह्यसूत्रे तदुक्तेः सत्त्वात् । कात्यायनस्य तु श्रौतसूत्रमेव, तत्र नायं विषयः । पारस्करीये गृह्यसूत्रे नेयं पङ्क्तिर्दृश्यते ।

सिद्धस्य पक्वस्य । अतएव पाकासम्भवे तण्डुलादयोऽनुकल्पाः स्मर्यन्ते ।

पाकाभावे प्रवासे च तण्डुलानोषधीस्तथा ।
पयो दधि घृतं वाऽपि कन्दमूलफलानि च ॥
यो यजेद्देवयज्ञादौ जलं वा यस्तु वा जले ।
एवं च कृत्वा पाकयज्ञ इत्येषां समाख्या ।

कूर्मपुराणेऽपिः—

यदि स्याल्लौकिकः पाकस्ततोऽन्नं तत्र हूयते ।
शालाग्नौ तत्र चेदन्नं विधिरेष सनातनः ॥

अङ्गिराः—

शालाग्नौ वा पचेदन्नं लौकिके चापि नित्यशः ।
यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते ॥

मनुः—

वैवाहिकेऽग्नौ कुर्वीत यज्ञकर्म यथाविधि ।
पञ्चयज्ञप्रधानं च पक्तिं चान्वाहिकीं गृही ॥

याज्ञवल्क्यः—

स्मार्त्तं कर्म विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।
दीपकालाहुते वापि श्रौतान्वैवाहिकाग्निषु ॥

अनुकल्पानाह शातातपः—

लौकिके वैदिके वाऽपि हुतोत्सृष्टे जले क्षितौ ।

वैश्वदेवस्तु कर्त्तव्यः पञ्चसूनापनुत्तये ॥

हुतोत्सृष्टे। अन्येन होमं कृत्वा त्यक्ते। अयं च श्रौतस्मार्त्ताग्न्यभावेऽपि शूद्रेणापि लौकिकाग्न्यादौ होमः कर्त्तव्यः। अविशेषेण वचनसङ्कोचे मानाभावाच्च।

तथा सिद्धस्य हविष्यस्य जुहुयादिति अविशेषेण प्रवृत्तवचनस्वरसात्कौश्चिच्च वैश्वदेवस्य पाकसंस्कारत्वस्वीकरणाच्च शूद्रस्यापि पाकेनैव होमो मुख्यः। तदभावे तु तण्डुलादिभिरिति शास्त्रस्वरसः। शूद्रं प्रति विशिष्य पाकेन होमस्यानिषिद्धत्वात्। श्राद्धे आमेनैव तु शूद्रस्येति नियमान्न पाकेन श्राद्धम्। ब्राह्मणाय दानविरोधाच्च। कलौ विप्रस्य शूद्रान्नभक्षणनिषेधात्।

एवं यत्र यत्र पाकदानं सामान्यप्राप्तमनिषिद्धमवारितं तच्छूद्रस्यापि भवति। अतएव पाकेनान्नदानं अग्नौ यालवा(?)प्रतिपत्तिपक्षे न विरुध्यते। ब्राह्मणप्रतिपत्तिस्तु बाधाभावान्न भवति। आमेन तु तत्करणे ब्राह्मणप्रतिपत्तिर्न विरुध्यते। अत्र चार्थे सर्वनिबन्धकाराणामविवाद एव। किं तु लोकविद्विष्टत्वात् वैश्वदेवादिकं पाकेन शूद्रस्यानुचितमिति ऋजवः। अतएव,

त्रिषु वर्णेषु कर्त्तव्यं पाके भोजनमेव च।
शुश्रूषामभिपन्नानां शूद्राणां च वरानने।

दिने त्रयोदशे प्राप्ते पाकेन भोजयेद्विजान् ।

पञ्चविधिः प्रयोक्तव्यः शूद्राणां मन्त्रवर्जितम् । इति वाराहपुराणे पाकेन श्राद्धं युगान्तरविषयतयोपसंहरति लोकविद्विष्टत्वादेवेति ।

देवेभ्यः स्वाहेत्यादिस्वाहाकारप्रयोगोऽप्यस्य न भवतीति प्रागेवोक्तम् ।

परिशिष्टे—

उत्तानेन तु हस्तेन ह्यङ्गुष्ठाग्रेण पीडितम् ।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः ॥

शौनकः—

अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयादग्निहोत्रदेवताभ्यः सोमाय वनस्पतयेऽग्नीषोमाभ्यामिन्द्राग्निभ्यां द्यावापृथिवीभ्यां धन्वन्तरये इन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे स्वाहेति हविष्यस्य होमयोग्यस्य अग्निहोत्रदेवताः सूर्याग्निप्रजापतयः ।

कात्यायनस्तु पञ्चाहुतीराह—

वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयात् । ब्रह्मणे प्रजापतये ऋषिभ्यः कश्यपायानुमतयइति । भूतयज्ञमाह शौनकः—

अथ बलिहरणमेताभ्यश्चैव देवताभ्यो ऽद्भ्य ओ-

षधिवनस्पतिभ्यो गृहाय गृहदेवताभ्यो वास्तुदेवताभ्यो इन्द्रायेन्द्रपुरुषेभ्यो यमाय यमपुरुषेभ्यो वरुणाय वरुणपुरुषेभ्यः। सोमाय सोमपुरुषेभ्य इति प्रतिदिशम्। ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये। विश्वेभ्यो देवेभ्यः सर्वेभ्यो भूतेभ्यो दिवाचारिभ्य इति दिवा। नक्तञ्चारिभ्य इति नक्तम्। रक्षोभ्य इत्युत्तरतः। स्वधा पितृभ्य इति प्राचीनावीती शेषं दक्षिणतो निनयेदिति। एताभ्यो वैश्वदेवहोमदेवताभ्यः।

वाजसनेयिगृह्ये तु बलिरप्यन्यथा दर्शितः। स तत एवावधार्यः।

छन्दोगपरिशिष्टे अमुष्मै नम इति बलिदानं विधीयते।

स्वधाकारेण निनयेत् पित्र्यं बलिमतः सदा।
तमप्येके नमस्कारैः कुर्वते नेति गौतमः।

एक इति शाखान्तराभिप्रायम्। एते बलयः स्वस्वशाखानुसारेण यथावत्कार्याः न पुनरेष्वेकप्रकारोऽस्ति।

मार्कण्डेयः—

एवं गृहबलिं दत्वा गृहे गृहपतिः शुचिः।
आप्यायनाय भूतानां कुर्यादुत्सर्गमादरात्॥

अन्नस्येति शेषः। उत्सर्गे च मन्त्रा दर्शिताः।

विष्णुपुराणे—

देवा मनुष्याः पशवो वयांसि
सिद्धाः सयक्षोरगदैत्यसङ्घाः ।
प्रेताः पिशाचास्तरवः समस्ता
ये चान्नमिच्छन्ति मया प्रदत्तम् ।

पिपीलिकाकीटपतङ्गकादयो
बुभुक्षिताः कर्मनिबन्धबद्धाः ।
प्रयान्तु ते तृप्तिमिदं मयान्नं
तेभ्यो निसृष्टं सुखिनो भवन्तु ।

येषां न माता न पिता न बन्धु-
र्नैवान्यासिद्धिर्न तथान्नमस्ति ।
तत्तृप्तयेऽन्नं भुवि दत्तमेत-
त्तेषां सुतृप्तिर्मुदिता भवन्तु ॥

भूतानि सर्वाणि तथान्नमेत-
दहं च विष्णुर्न ततो ऽन्यदस्ति ।
तस्मादिदं भूतहिताय भूत-
मन्नं प्रयच्छामि सुखाय तेषाम् ।

चतुर्दशो लोकगणो य एष
तत्र स्थिता येऽखिललोकसङ्घाः ।

तृप्त्यर्थमन्नं हि मया प्रदत्तं
तेषामिदं ते मुदिता भवन्तु ।
इत्युच्चार्य नरो दद्यादन्नं श्रद्धासमन्वितः ।
भुवि भूतोपकाराय गृही सर्वाश्रयो यतः ॥
श्वचण्डालविहङ्गानां भुवि दद्यात्ततो नरः ।

एतच्च काम्यम् ।

ततोऽन्यदन्नमादाय भूमिभागे शुचौ पुनः ॥
दद्यादशेषभूतेभ्यः स्वेच्छया च समाहितः ।

इति विष्णुपुराणे एव स्वेच्छयेति वचनात् । अत्र दद्यादशेषभूतेभ्य इत्युपक्रम्य पञ्चश्लोकरूपमन्त्रात्मकगुणविधानादित्युच्चार्येत्युपसंहार इति वचनात्तादृशस्यैव परामर्शात् श्लोकपञ्चकमप्युच्चार्य एक एव वलिर्देय इति द्रष्टव्यम् ।

ततः श्वादिबलिमाह मनुः—

शुनां च पतितानां च श्वपचां पापरोगिणाम् ।
वायसानां कृमीणां च शनकैर्निक्षिपेद् भुवि ॥
भुवीति श्वकाकाद्युपभोगयोग्यप्रदेशोपलक्षणम् ।
श्वभ्यो नम इत्यादिक्रमेणान्नं निःक्षिपेत् ।

ततो व्यासः—

ऐन्द्रवारुणवायव्या याम्या नैरृतिकास्तथा ।

वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम् ॥
द्वौ श्वानौ श्यावशबलौ वैवस्वतकुलोद्भवौ ।
ताभ्यां पिण्डं प्रयच्छामि स्यातामेतावहिंसकौ ।
दत्त्वाऽनेन विधानेन बलीन्पश्चादुपस्पृशेत् ॥ इति ।
आभ्यां श्लोकाभ्यां प्रत्येकं बलिद्वयं देयम् ।
ततः सर्वानपि बलीन्हस्तेनोपस्पृशेत् ।

अत्र च वैश्वदेवहोमः सायं प्रातश्च कार्यः । 'सायं प्रातः सिद्धस्य हविष्यस्य जुहुया'दिति शौनकोक्तेः ।

मनुनाप्युक्तम्—

सायं प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म च ।
अनश्नताऽपि सततमन्यथा किल्मिषी भवेत् ॥

तत्र प्रकारमाह स एव—

सायं त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् ।
वैश्वदेवं हि नामैतत्सायं प्रातर्विधीयते ॥

अत्र पत्न्याः कर्तृत्वं यजमानासन्निधौ द्रष्टव्यम् । अन्यथा तु यजमान एव कुर्यात् ।

तथा च विष्णुपुराणे—

पुनः पाकमुपादाय सायमप्यवनीपते ।
वैश्वदेवनिमित्तं वै पत्न्या सार्द्धं बलिं हरेत् ॥
तत्राऽपि श्वपचादिभ्यस्तथैवाऽन्नविसर्जनम् । इति ।

तदाह मनुः—

एकपाकेन वसतां पितृदेवद्विजार्चनम् ।
एकं भवेद्विभक्तानां तदेव स्याद् गृहे गृहे ॥

विभक्तानामित्युत्तरवचनादेकपाकेनेत्यविभक्तधन-परं वैश्वदेवादि ।

गोभिलगृह्ये—

यद्यस्मिन्काले बहुत्राऽन्नं पच्यते गृहपतिर्महानसा-देवैतद्बलितन्त्रं कुर्यात् । यस्य त्वेषामग्रतोऽन्नं सिध्येत् स निह्नुतमग्नौ हुत्वाऽन्नं ब्राह्मणाय दत्वा भुञ्जीतेति ।

यद्यविभक्तानां मध्ये ज्येष्ठस्य गृहे पाको निवृत्त-स्तदा ज्यायानेव स्वगृहपाकेन वैश्वदेवादि कुर्यात् । क-निष्ठास्तु न किञ्चित्कुर्युः । किंतु भुञ्जीरन्नेव । यदि तु ज्यायसा कृते वैश्वदेवे कनीयसां गृहे पाकः सिद्धस्त-दा ते तूष्णीमेवाग्नौ किञ्चिदन्नं प्रक्षिप्य किञ्चिद्ब्राह्म-णाय दत्वा भुञ्जीरन्निति ॥

वैश्वदेवहोमादौ गौणाधिकारिण आहाऽत्रिः—

पुत्रो भ्राताऽथवा ऋत्विक् शिष्यश्वशुरमातुलाः ।
पत्नीश्रोत्रियकासाश्च इष्टास्ते बलिकर्मणि ॥

प्रवासादावेतैरपि गृहे कारयेदित्यर्थः ॥

अतएव बौधायनः—

प्रवासं गच्छतो यस्य गृहे कर्त्ता न विद्यते ।
पञ्चानां महतामेष स यज्ञैः सह गच्छति ॥ इति ।

जमदग्निः—

वैश्वदेवं तथा रात्रौ कुर्य्याद्बलिहृतिं तथा ।
महतः पञ्च यज्ञांस्तु दिवैवेत्याह धर्म्मवित् ॥

आश्वलायनगृह्ये—

धर्मविन्नाचरेत्स्नानमाह्निकं तु पुनः पुनः ।
तर्पणं ब्रह्मयज्ञं च वैश्वदेवं च नाचरेत् ॥

दिवा रात्रौ वा द्विर्द्विर्नाचरेदित्यर्थः । मण्डलेषु च कामनाभेदेन प्रकारभेदा यथाशास्त्रं यथोपदेशं चोह्नीयाः ।

तत्र सर्वसाधारणत्वात्पौराणवैश्वदेवप्रकारः कथ्यते ।

तद् यथा—एकस्मिन्पात्रे हविष्यमन्नमुद्धृत्य तथा सति सम्भवे हविष्यमपि पात्रान्तरे उद्धृत्य तदसम्भवे पूर्वपात्रहविष्यामिश्रितमुद्धृत्य लौकिकाग्नेस्तदनुकल्प्य जलादेर्वा पश्चात्प्राङ्मुख उपविश्य पञ्चदशाद्यक्षरोच्चारणयोग्यकालं यावदमन्त्रकं प्राणानायम्याचम्य वा विष्णुं संस्मृत्य नम इत्यग्निं सम्पूज्य नम इत्येव परिषिच्य स्वाहेत्युच्चार्य नमइति चोच्चार्य ब्रह्मणे प्र-

जापतये गृह्याभ्यः कश्यपाय अनुमतये पञ्चाहुतीर्हुत्वा परिषेचनं कुर्वीत ।

अथ बलयः ॥

नमः पृथिव्यै । नमः पर्जन्याय । नमोऽद्भ्यः । नमो धात्रे । नमो ब्रह्मणे । ततो ब्रह्मबलिस्थानात्पूर्वदिग्भागे एकबलिस्थानम्परित्यज्यैव प्रागपवर्गं षड् बलीन् दत्वा पंक्त्युत्तरतः प्रागपवर्गं सप्तबलीनां स्थापनं परित्यज्यैवं-विधा रेखा पङ्क्तिद्वयस्य परितः। इन्द्रादिबलिदानम्—नम इन्द्राय । नमोऽग्नये । नमो धर्म्मराजाय । नमो-निर्ऋतये । नमो वरुणाय । नमो वायवे । नमइन्दवे । नमो धन्वन्तरये । एवं दिग्बलिं दत्वा पूर्ववद्ब्रह्मबलेः पूर्वतो नमो ब्रह्मणे इति पुनरेकं बलिं दत्वान्ते एतत्पं-क्त्युत्तरत उत्तरे सप्त बलयो देयाः । प्रागपवर्गमित्येव । नमोन्तरिक्षाय। नमो भानवे । नमो विश्वेभ्यो देवेभ्यः । नमो विश्वभूतेभ्यः । नमो विश्वपतिभ्यः । नमो देवादि-चतुर्दशगणपक्षेभ्यः । नम उषसे । इति सप्त दत्वा सर्वबलीनामुत्तरतो भूतपतय इति च दत्वा सर्वबलीनां दक्षिणतः प्राचीनावीती पितृतीर्थेन नमः पितृभ्य इति दत्वा सर्वबलिसमुदायस्य वायुकोणे प्राचीनावीत्येव नमो यक्ष्मैतत्तेवनेजनामिति अन्नावशेषमिश्रं तोयं

दद्यात् । एवं पञ्चविंशतिबलयः । एतान्दत्वा क्रमेण तद्बलिस्थानेषु तेषामाचमनाय सलिलं दद्यात् । अत्रान्तर्भूतपितृबलिर्नित्यश्राद्धं च पितृयज्ञः । नित्यश्राद्धव्यतिरेकेण पितृबलिदानमन्त्रेणापि पितृयज्ञनिष्पत्तिर्भवति । एवम्बलिं दत्वा निवीती सन् सनकाद्युद्देशेन ग्रासचतुष्टयपर्याप्तमन्नं सङ्कल्पयेत् । नमः सनकादिमनुष्येभ्य इदमन्नमिति । अयं मनुष्ययज्ञः । ग्रासचतुष्टयपरिमितान्नदानाशक्तौ शिष्टाचाररूपप्रमाणवशात् तदर्द्धं पादमेव वेति न्यायानुसारेण ग्रासद्वयपरिमितं ग्रासमात्रं वा देयम् । एवं मनुष्ययज्ञानन्तरं पूर्वमेव पृथक् कृतमन्नं गृहीत्वा गृहाद्बहिश्च श्वपचवायसादिभ्य इदमिति भूमौ यथोपभोगं यथाशक्ति च दत्वा पादौ प्रक्षाल्याचम्य नित्यश्राद्धं विधाय अतिथिसद्भावे अतिथिं यथाशक्ति पूजयेदिति ।

अत्रान्नदानविषये विशेषः । यदा शूद्रः पाकेनान्नं ददाति तदा तद्द्रवे दद्यात् । जले वा प्रक्षिपेत् न तु ब्राह्मणाय देयम् ।

शूद्रपाकभोजनस्य कलौ ब्राह्मणादीनां निषिद्धत्वात् । चातुर्वर्ण्यं चरेद्भैक्ष्यमित्यस्य च कलियुगेतरविषयत्वात् । इयं प्रतिपत्तिरितरबलीनामपि द्रष्टव्या । आ-

मान्नपक्षे तु न काऽप्यनुपपत्तिरिति । आमेनैव वैश्वदेवादिकमपि कर्त्तव्यमिति प्रशस्तः पक्षः । लोकविद्विष्टताऽप्यत्र न भवति । शिष्टाचारोप्येवम् ।

## अथ नित्यश्राद्धम् ।

तत्रायं प्रयोगक्रमः । वैश्वदेवमण्डलस्य दक्षिणभागे पित्राद्यर्थं तु बहून् षड्वर्गद्वयापेक्षया द्वौ वा उभयोरप्येकमेव वा निधाय श्राद्धसम्भृतिं उपकल्प्य कुशबहुसङ्ख्यया कुशान् सातिलान् करे गृहीत्वा समस्तसम्पदित्यादिद्विजप्रार्थनावाक्यं मनसा जपन् ब्राह्मणान्तरमुखेन वा वाचयन् । सहिरण्यान् करस्थितकुशान् ब्रह्मदण्डार्थं विप्राग्रे भूमौ निधाय ममाधिकारसम्पदस्त्विति भवन्तो ब्रुवन्तु इति द्विजान् वाचयेत् । ततोऽस्तु श्राद्धाधिकारसम्पदिति तैः प्रत्युक्तः । आचम्य । अमन्त्रकं प्राणानायम्य विष्णुं स्मृत्वा अद्येत्यादिदेशकालौ स्मृत्वा अस्मत्पितृपितामहप्रपितामहानां अमुकगोत्राणां अमुकदासानां सपत्नीकानां नित्यश्राद्धमहं करिष्ये इति सङ्कल्प्य यथोपदेशं पाद्यादिभिरुपचारैः श्राद्धं कुर्यात् । प्रत्युपचारं च इदं वः पाद्यं नम इति प्रकारेण नमोमन्त्रेण मन्त्रकार्यं कुर्यात् । अन्यांस्तु स्मार्त्तान्वैदिकान् वा मन्त्रान् निकटोपविष्टः

ब्राह्मणः पठेत् न वेति । शेषं पार्वणश्राद्धवदूह्यम् ।

तत्र वर्जनीयपदार्थानाह—

मत्स्यपुराणे—

नित्यं तावत्प्रवक्ष्यामि अर्घ्यावाहनवर्जितम् ।
अदैवं तद्विजानीयात् पार्वणं तद्धि कीर्त्तितम् ॥
नावाहनाग्नौकरणं न पिण्डो न विसर्जनम् ।

इति काशीखण्डे ।

नित्यश्राद्धमदैवं स्यादर्घपिण्डाविवर्जितम् ।
दक्षिणारहितं त्वेतत् दातृभोक्तृव्रतोज्झितम् ॥ इति ।
दातृभोक्तृव्रतं नियमः ब्रह्मचर्याधःशय्यादिः ।
अत्र दक्षिणानिषेधो यथोक्तदक्षिणाविषयः ।
ब्रह्मचर्यादिनियमो वैश्वदेवास्तथैव च ।
नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत् ॥
दत्वा तु दक्षिणां शक्त्या नमस्कारैर्विसर्जयेत् ।

इति व्यासवचनात् ।

तथा सङ्कल्पवाक्यं पाद्यार्चनं अन्नसङ्कल्पं अपोशानं प्रत्यपोशानमपसव्येन दत्वा सव्येन 'शिवा आपः सन्तु' इत्यादि 'गोत्रं नो वर्द्धता'मिति वरप्रदानान्तमुक्त्वा पणं काकिणीं फलं वा यथाशक्ति दक्षिणां दत्वा विष्णुं नमस्कृत्य ब्राह्मणान् सूर्यं प्रणमेत् । असम्पत्तौ

फलमूलपयांस्यपि यथालाभमन्वहं पितृभ्यो दद्यात् । तत्राऽप्यशक्तौ श्रद्धया उदकतर्पणेनैव श्राद्धफलं भवति ।

यदेव तर्पयेदद्भिः पितॄन् श्रद्धासमन्वितः ।
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम् ॥ इति ।

एतच्च नित्यश्राद्धं संवत्सरं यावदावश्यकम् । तत ऊर्ध्वं तु कृताकृतम्, कृते अभ्युदयः अकृते प्रत्यवायाभावः ।

तथा चाऽऽपस्तम्बः—

नित्यश्राद्धमित्युपक्रम्य प्रतीच्छेदित्येतदन्नमुक्त्वा, एवं संवत्सरं तेषामुत्तमं लोहेनान्नेन कार्यमित्याद्यभिधाय कृताकृतमत ऊर्ध्वं श्राद्धेन तृप्तिं वेदयन्ति पितर इत्युक्तवान् ।

उत्तमं संवत्सरान्ते क्रियमाणं नित्यश्राद्धं लोहेनान्नेन लोहितच्छागमांसप्रधानेनान्नेन कार्यम् । अत ऊर्ध्वं संवत्सरान्ते विहितैतत्श्राद्धानन्तरं नित्यश्राद्धं कृताकृतमित्यर्थः ।

ततः, सौरभेय्यः सर्वहिताः पवित्रा पापनाशनाः ।
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ॥
पञ्चभूते शिवे पुण्ये पवित्रे सूर्यसम्भवे ।

प्रतीच्छाऽन्नं मया दत्तं सौरभेयि नमोऽस्तु ते ॥
इति मन्त्रेण परगवे सान्नं घासमुष्टिं गोग्रासं दद्यात् ।
घासमुष्टिं परगवे सान्नं दद्यात्तु यः सदा ॥
अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति ।

ततो गोदोहमात्रं अङ्गणे स्थित्वा अतिथिं प्रतीक्षते । अविदितगोत्राचरणनामश्रुतशीलादिकमन्नार्थिनमतिथिं पश्येत्तदा सत्कारपूर्वं आसनं दत्वा गन्धादिभिरभ्यर्च्य इदमन्नं सोपकरणं तुभ्यं सम्प्रददे इति उदकपूर्वं यथोपपन्नमन्नपानादि दत्वा अतिथिं परितोष्य कृतकृत्यमात्मानं मन्येत शूद्रमप्यतिथिं स्वशक्त्या भोजयेत् ।

कूर्म्मपुराणे—

हन्तकारमथाग्रं वा यो भिक्षां शक्तितो द्विजः ।
दद्यादातिथये नित्यं बुध्येत परमेश्वरम् ॥ इति ।

तल्लक्षणमाह मनुः—

ग्रासमात्रं भवेद्भिक्षा अग्रं ग्रासचतुष्टयम् ।
अग्रं चतुर्गुणीकृत्य हन्तकारो विधीयते ॥

मार्कण्डेयः—

भोजनं हन्तकारं वा मुखं भिक्षामथापि वा ।
अदत्वा च न भोक्तव्यं यथाविभवमात्मनः ॥

नारसिंहे—

अकृते वैश्वदेवे तु भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्वा विसर्जयेत् ॥

अत्रोपपत्तिमाह पराशरः—

वैश्वदेवकृतं पापं शक्तो भिक्षुर्निवारितुम् ।
न तु भिक्षुकृतान्दोषान् वैश्वदेवो व्यपोहति ।

देवलः—

सायं प्रातर्गृहद्वारं भिक्षार्थं नावघट्टयेत् । इति ।

मार्कण्डेयः—

अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम् ।
अहुत्वाऽन्नं कृमीन्भुङ्क्ते अदत्वा विषभोजनम् ॥
आत्मार्थं पाचनं यस्य रसार्थं यस्य मैथुनम् ।
वृत्त्यर्थं यस्य चाधीतं निःफलं तस्य जीवितम् ॥

विष्णुः—

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते ।
स तस्य दुष्कृतं दत्वा पुण्यमादाय गच्छति ॥

याज्ञवल्क्यः—

दिवाऽतिथौ तु विमुखे गते यत्पातकं भवेत् ।
तदेवाष्टगुणं प्रोक्तं सूर्योढे विमुखे गते । इति ।
अपि शाकं पचानस्य शिलोञ्छेनापि जीविनः ॥

स्वदेशे परदेशे वा नाऽतिथिर्विमना भवेत् ।

मनुः—

ब्राह्मणस्य त्वनतिथिर्गृहे राजन्य उच्यते ।
वैश्यशूद्रौ सखा चैतौ ज्ञातयो गुरुरेव च ॥
यदि त्वतिथिधर्म्मेण क्षत्रियो गृहमाव्रजेत् ।
भुक्तवत्सु तु विप्रेषु कामं तमपि भोजयेत् ।
वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्म्मिणि ॥
भोजयेत्सह भृत्यैस्तावानृशंस्यं प्रयोजनम् ।
इतरानपि सख्यादीन् सम्प्रीत्या गृहमागतान् ॥
प्रकृत्याऽन्नं यथाशक्ति भोजयेत्सह भार्यया ।
कुटुम्बी गृही प्रकृत्य पक्त्वा ।

विष्णुधर्मोत्तरे—

चण्डालो वाऽथ पापी वा शत्रुर्वा पितृघातकः ।
देशे काले ह्युपगतो भरणीयो मतो मम ।

भरणीय इत्यनेनाऽन्येऽतिथिधर्मा अभ्युत्थानादयो व्यावर्त्तन्ते । अत्राऽपरो विशेषो गोविन्दार्णवेऽस्मत्कृते द्रष्टव्यः ।

मनुः—

पञ्चैतान्यो महायज्ञान् न हापयति तत्त्वतः ।
स गृहे निवसेन्नित्यं सूनादोषैर्न लिप्यते ॥

पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः।
कण्डनी चोदकुम्भश्च बध्यन्ते (येन जन्तवः।)

इति मनुस्मृतौ।

ततो यथाशक्ति धर्मभिक्षुकेभ्य इतरेभ्योऽपि भिक्षुभ्यो भिक्षां दद्यात्। धर्मभिक्षवस्तु—

यती च ब्रह्मचारी च विद्यार्थी गुरुपोषकः।
अध्वगः क्षीणवृत्तिश्च षडेते धर्मभिक्षुकाः॥ इति।

अथ भोजनविधिः।

तत्र कृतनित्यक्रियः शुचिः प्रयतमानसोऽर्द्धं चन्द्रमण्डलं कृत्वा तदुपरि यथासम्भवमिति द्विपात्रं विन्यस्य आर्द्रपाणिपादयुगः पवित्रपाणिः पीठोपरि प्राङ्मुख उपविश्य यतवाग्वामहस्ताङ्गुष्ठधृतपात्रे नमो नारायणायेति अभिमन्त्रितजलेनान्नमभ्युक्ष्य, चित्राय नमः। प्रेतेभ्यो नम इति दक्षिणभागे धर्मराजाय बलिं दद्यात्। प्रवरसंख्यया बलिदानमित्येके। ततस्तूष्णीं चुलुकेन जलं पिबेत्। ततः पञ्च ग्रासान् आर्द्रामलकमात्रान् दन्तैरस्पृश्य सममनास्वादयन् प्राणाय नम इत्यादि जपन् भुञ्जीत।

पौरस्त्यास्तु अपोशानमन्त्रा बलिमन्त्राः प्राणा-

( ) बध्यते यास्तु वाहयन्। इति पाठान्तरम्।

Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-10

No. 9—(Part I)-The Bhakti Chandrikā (भक्तिचन्द्रिका) [भक्ति], a Commentary on S'aṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.

Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 0-15

No. 10-(Part I)-The Siddhāntaratna, (सिद्धान्तरत्न) [गौडीयवैष्णवदर्शन], by Baladeva Vidyābhūṣaṇa.

Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 1-2

No. 10-(Part II)—Do. Do. Rs. 2-12

No. 11-The S'rī Vidyā Ratna Sūtras, (श्रीविद्यारत्नसूत्र) [ तन्त्र ], by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.

Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste, Sāhityāchārya. Rs. 0-9

No. 12-The Rasapradīpa, (रसप्रदीप) [अलङ्कार], by Prabhākara Bhaṭṭa.

Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-2

No. 13-The Siddhasiddhānta Saṅgraha, (सिद्धसिद्धान्तसंग्रह) [नाथमार्ग], by Balabhadra.

Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14-The Triveṇikā, ( त्रिवेणिका ) [अलङ्कार], by Āśādhara Bhaṭṭa.

Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-14

No. 15-(Part I)-The Tripurārahasya, ( Jñāna Khaṇḍa) (त्रिपुरारहस्य, ज्ञानखण्ड) [तान्त्रिकदर्शन],

Ed. with a Prefatory Note by Gopinath Kaviraj, M.A Rs. 0-14

No. 15-( Part-II )—Do. Do. Rs. 2-4

No. 15-( Part III )—Do. Do. Rs. 2-0

No. 15-( Part IV )—Do. with Introduction, etc. by Gopinath Kaviraj, M. A.

No. 16-The Kāvya Vilāsa, (काव्यविलास) [अलङ्कार], by Chirañjīva Bhaṭṭāchārya.

Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1-2

No. 17–The Nyāya Kalika, (न्यायकलिका) [न्याय] by Bhatta Jayanta
Ed with Introduction by M M Gaṅgānatha Jhā M A D Litt Rs 0–14

No 18–(Part I)–The Goraksa Siddhānta Sangraha (गोरक्षसिद्धान्तसंग्रह) [नाथमार्ग],
Ed with a Prefatory Note by Gopinath Kaviraj, M A, Rs 0–14

No 19–( Part I )–The Prakrita Prakasa (प्राकृतप्रकाश) [प्राकृतव्याकरण],
by Vararuchi with the Prakrita Sañjivani by Vasantaraja and the Subodhini by Sadānanda
Ed with Prefatory note etc by Batuk Nath Sarma M A and Baladeva Upadhyaya M A
Rs 2–4

No 19–( Part II ) Ditto Ditto Rs 2–12

No 19—( Part III ) Introduction etc ( In Preparation )

No 20 The Mansatattvaviveka (मांसतत्त्वविवेक) [धर्मशास्त्र], by Viśvanatha Nyāyapañchanana Bhattacharya
Edited with Introduction etc by Pandit Jagannātha Sastri Hoshing Sahityopadhyaya, with a Foreword by Pandit Gopi Nath Kavirāja M A Principal Government Sanskrit College, Benares Rs 0–12

No 21–( Part I ) The Nyaya Siddhanta Malā (न्यायसिद्धान्तमाला) [न्याय], by Jayarama Nyaya Pañchanana Bhattacharya
Edited with Introduction etc by Dr Mangal Deva Sastri, M A, D Phil ( Oxon ), Librarian, Govt Sanskrit Library, Sarasvati Bhavana Benares
Rs 1–4

No 21–( Part–II ) Ditto Ditto Rs 2–0

No 22–The Dharmanubandhi Slokachaturdasi (धर्मानुबन्धिश्लोकचतुर्दशी) [धर्मशास्त्र], by Sri Sesa Krsna with a Commentary by Rama Pandit
Edited with Introduction etc by Narayana Sastri Khiste Sāhityacharya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana Benares Rs 1–0

No 23–The Navaratrapradipa (नवरात्रप्रदीप) [धर्मशास्त्र], by Nanda Pandit Dharmadhikāri
Ed with Introduction etc by Vaijanatha Sāstrī Varakale Dharmasastra–Sastrī Sadholal Research Scholar, Sanskrit

College, Benares, with a Foreword by Pândit Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares. Rs. 2-0

No. 24-The S'rī Rāmatāpinīyopaniṣad (रामतापिनीयोपनिषद्) [उपनिषद्], with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.
Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post-Āchārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs 3-12

No. 25-The Sāpiṇḍyakalpalatikā ( सापिण्ड्यकल्पलतिका ) [ धर्मशास्त्र ], by Sadāśivadeva alias Āpadeva with a commentary by Nārāyaṇa Deva.
Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares. Rs. 1-4.

No. 26-The Mṛgāṅkalekhā Nāṭikā ( मृगाङ्कलेखानाटिका ) [नाटिका], by Viśvanātha Deva Kavi.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityācharya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1-0

No. 27-The Vidvachcharita Panchakam ( विद्वच्चरितपञ्चकम् ) [निबन्ध], By Nārāyana S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt. Sanskrit College, Sarasvati Bhavana Library, Benares. With an Introduction by Gopināth Kaviraja, M.A., Principal, Govt. Sanskrit College, Benares. Rs. 2-0

No. 28-The Vrata Kos'a (व्रतकोश) [धर्मशास्त्र], by Jagannātha S'āstri Hosiṅga Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares. With a Foreword by S'rī Gopinātha Kaviraja, M. A., Principal, Govt. Sanskrit College, Benares. Rs. 4-0

No. 29-The Vṛitti dīpikā (वृत्तिदीपिका) [व्याकरण], By Mauni S'rī Kṛṣṇa Bhatta.
Edited with Introduction etc. by Pt. Gangadhara S'astri Bhāradvāja, Professor, Govt. Sanskrit College, Benares. Rs. 1-2

No. 30-The Padārtha Maṇḍanam ( पदार्थमण्डन ) [ वैशेषिक ], By S'rī Venīdatta.

Edited with Introduction etc by Pandit Gopala Sastri Nene, Professor, Govt Sanskrit College, Benares Rs 0-14

No 31 ( Part I)-The Tantraratna ( तन्त्ररत्न ) [ मीमांसा ], by Partha Sarathi Misra

Edited by M. M Dr Ganganatha Jha, M A, D Litt, Vice-Chancellor, Allahabad University Allahabad Rs 1-14

No 31-( Part II ) Ditto Ditto

Edited by Pt Gopal Sastri Nene, Govt Sanskrit College, Benares

No 32-The Tattvasāra ( तत्त्वसार ) [ न्याय ], by Rakhaldass Nyayaratna

Edited with Introduction etc by Harihara Sastri, Benares Hindu University Rs 1 0

No 33-( Part I ) The Nyaya Kaustubha ( न्यायकौस्तुभ ) [ न्याय ], *by Mahadeva Puntamkar*

Edited with Introduction etc by Umesa Misra, M A Allahabad University, Allahabad Rs 3-4

No 34 ( Part I ) The Advaita Vidyātilakam ( अद्वैतविद्यातिलकम् ) [ शाङ्करवेदान्त ], by Sri Samarapungava Diksita

With a Commentary by Sri Dharmayya Diksita

Edited with Introduction, etc, by Ganapati Lal Jha, M A., Sadholal Research Scholar, Govt Sanskrit Library, Benares Rs 1-4

No 35-The Dharma Vijaya Nāṭaka ( धर्मविजयनाटक ) [ नाटक ], by Bhudeva Sukla

Edited with Introduction etc, by Pandit Narāyana Sastri Khiste, Asst Librarian, Govt Sanskrit Library, Benares Rs 1-4

No 36-The Ānanda Kanda Champu ( आनन्दकन्दचम्पू ) [ चम्पू ], by Mitra Misra

Edited, with a Foreword by Gopinath Kaviraj M A, by Nanda Kishore Sahityacharya, Research Scholar, Sanskrit College, Benares Rs 3-8

No 37-The Upanidana Sūtra ( उपनिदानसूत्रम् ) [ वेद ],

Edited with Introduction by Dr Mangaldeva Sastri, M A, D Phil Rs 1-0

No 38-The Kiranāvali prakasa didhiti ( Guna ), ( किरणावली प्रकाशदीधिति ) [ वैशेषिक ], by Raghunath Siromani

Edited by Pandit Badrinath Sāstri, M A, Lucknow University Rs 1-12

No. 39–The Rāma Vijaya Mahākāvya, ( रामविजयमहाकाव्य ) [ काव्य ], by Rupanātha.
Edited by Pt. Ganapatilal Jha, M. A. Rs. 2–0

No. 40–(Part I) The Kālatattva Vivechana (कालतत्त्वविवेचन) [धर्मशास्त्र], by Raghunātha Bhaṭṭa.
Edited with a Foreword by Gopinātha Kaviraja M.A. by Nanda Kishore S'arma Sāhityāchārya, Research Scholar, Sanskrit College, Benares. Rs. 4–0

No, 40 ( Part II ) Do Do

No. 41–(Part I) The Siddhānta Sārvabhauma (सिद्धान्तसार्वभौम) [ज्योतिष], by S'rī Munīśvara.
Edited with Introduction etc. by Jyautiṣâchārya Pandit Murlidhara Thakkura, late Sadholal Scholar, Sanskrit College, Benares. Rs 3–0

No. 42–The Bheda Siddhi (भेदसिद्धि) [न्याय], by Vis'vanātha Panchânana Bhaṭṭāchārya.
Edited with notes etc., by Nyāya Vyākaranāchārya Pandit Sûrya Nārāyaṇa S'ukla, Professor, Govt. Sanskrit College, Benares.

No. 43–( Part I ) The Smārtollāsa ( स्मार्तोल्लास ) [ कर्मकाण्ड ], by S'iva Prasāda.
Edited with Introduction, notes, etc, by Vedāchārya Pandit Bhagavat Prasad Miśra, Professor, Govt. Sanskrit College, Benares.

No. 44–( Part I ) S'ūdrāchāra S'iromani (शूद्राचारशिरोमणि) [धर्मशास्त्र],
Edited by Sāhityāchārya Pandit Narayan S'astri Khiste.

No. 45–( Part I ) Kiranāvalī Prakāśa (Guna) (किरणावली प्रकाश-गुण) [ वैशेषिक ], by Vardhamāna.
Edited with a Foreword by Pt. Gopinath Kaviraj, M., A., by Pandit Badrinath S'astri, M. A., Lucknow University.

No. 46–( Part I ) Kāvya prakāśa dīpikā (काव्यप्रकाशदीपिका) [अलङ्कार], by S'rī Chaṇḍī Dāsa.
Edited by S'rī S'ivaprasāda Bhaṭṭāchārya, M. A., Professor, Presidency College, Calcutta.

No. 47–Bhedajayaśrī ( भेदजयश्री ) [ माध्ववेदान्त ], by S'rī Tarkavāgīśa Bhaṭṭa Venīdattāchārya.
Edited with Introduction etc, by Pandit Tribhuvan prasad Upādhyāya, M. A., Inspector of Sanskrit Pāṭhashalas, United Provinces, Benares.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M A

Vol I—

(a) Studies in Hindu Law (1). its Evolution, by Gangānātha Jhā

(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopinath Kaviraj

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj

(b) Index to S'abara's Bhāṣya, by the late Col G. A. Jacob

(c) S'tudies in Hindu Law (2) —its sources, by Gaṅgānāth Jha

(d) A New Bhakti Sutra, by Gopinath Kaviraj

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj

(g) Hindu Poetics, by Batuka nātha S'armā

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi

(i) Some aspects of Vira S'aiva Philosophy, by Gopinath Kaviraj.

(j) Nyaya Kusumāñjali (English Translation), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇa S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G A. Jacob

(b) Studies in Hindu Law (3) Judicial Procedure by Gaṅgā nātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj

(e) Naiṣadha and S'rī Harṣa by Nilakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P N Pātankar, Rs 5.

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgā-nātha Jha.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda-Prātiśākhya, by Maṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj.

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans. by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs 5

Vol. V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmayaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Taittirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri.

(e) Formal Training and the Ancient Indian Thought, by G.L Sinha.

(f) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nātha Roy.

(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob..

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.

(c) An Index etc. the Ramayana, by Manmatha nātha Roy.

(d) Studies in Hindu Law by M. M. Gaṅganatha Jha.

(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares), by Gopinātha Kavirāj.

(f) Notes and Queries, by Gopinātha Kavirāj.

Vol. VII.

(a) Bhâmaha and his Kâvyâlaṅkâra, by Baṭukanâtha S'armâ and Baladeva Upâdhyâya.

(b) Some variants in the readings of the Vais'eṣika Sûtras, by Gopinâtha Kavirâj.

(c) History and Bibliography of Nyâya Vais'eṣika Literature, by Gopinâtha Kavirâj.

(d) An attempt to arrive at the correct meaning of some obscure Vedic words, by Sitâram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya, Taittiriya, and Atharva Veda (Châturadhyâyika) Prâtis'âkhyas, by Mangal Deva Shâstri.

(f) An Index to the Ramayana, by Manmatha Nâth Roy.

(g) An Index to S'abara's Bhâṣya, by the late Col. J. A Jacob.

(h) Gleanings from the Tantras, by Gopinâtha Kavirâj.

(i) The date of Madhusudana Saraswati, by Gopinâtha Kavirâj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinâtha Kavirâj.

(k) *A note on the meaning of the word Parârdha*, by Umes'a Mis'ra.

Vol. VIII.

(a) Indian Philosophy, by Taraknath Sanyal.

*(b) An Index to the Râmâyaṇa, by Manmatha Nath Roy.*

(c) Index to S'abara's Bhâṣya, by the late Col. J. A Jacob.

(d) Hari/Svâmi, the commentator of S'atapatha Brâhmana and the date of Skanda Svami the commentator of the Rigveda, by Mangaladeva S'âstri.

(e) Mysticism in Veda, by Gopinâth Kaviraj.

(f) The Deva dâsi: a brief history of the Institution, by Manmatha Nâtha Roy.

Vol. IX (In progress)

(a) The Life of a Yogin, by Gopinâtha Kavirâj.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES

( SANSKRIT )

## SARASVATALOKA

Edited by

GOPINATH KAVIRAJ, M. A.

Kirana 1 ( In progress )

(a) Mangalam, etc, by Nārāyaṇa S'āstri Khiste.

(b) Mimansaka mata saṃgraha, by Haranchndra Bhaṭṭācharya.

(c) S'rimad Ācharya Mandana Mis'ra by Chinna Swami S'astri

(d) Bhagavato Buddhasya Charitam Upades'as'cha : by Gopinatha Kaviraj

Kirana I ( Supplement )

Sanskrita Kavi Parichaya-(Bharavi) by Nanda Kishore Sharma.

Kirana II ( In progress )

(a) S'āradā Prasādanam by Nārâyana S'āstri Khiste.

(b) Chūḍāmaṇi Dars'anam by S'as'adhara Tarkachūḍāmaṇi.

To be had of
The Superintendent
Government Press, U. P.,
Allahabad.

श्रीमत्सर्वतन्त्रस्वतन्त्र-

विद्वद्वरश्रीशेषकृष्णनिर्मितः

# शूद्राचारशिरोमणिः

राजकीयसंस्कृतपाठशाला-सरस्वतीभवनोपाध्यक्षेण
साहित्याचार्यपदालङ्कृतेन श्रीमता नारायण-
शास्त्रिखिस्तेशर्मणा संस्कृतः ।



THE

# S'ŪDRĀCHĀRA S'ĪROMAṆI

BY

S'RĪ S'EṢA KṚIṢṆA.

( PART II )

EDITED WITH INTRODUCTION ETC

BY

SĀHITYĀCHĀRYA

PANDIT NĀRĀYAṆA S'ĀSTRĪ KHISTE
Assistant Librarian, Govt. Sanskrit College,
Saraswati Bhawana Library, Benares.



1936

॥ श्रीः ॥

# उपोद्घातः



अथायमुपक्रम्यते शूद्राचारशिरोमणिर्नाम श्रीकृष्णशेषप्रणीतो धर्मशास्त्रनिबन्धो मुद्रयित्वा प्रकाशयितुम् । अस्य प्रणेता श्रीकृष्णशेषः किल विश्वविख्यातवैदुषीवैभवः काशीनिवासी महाराष्ट्रब्राह्मण आसीत् । तत्पिता श्रीनृसिंहपण्डितोऽपि महाविद्वान् तात्कालिककाशिराजप्रधानामात्य आसीत् । श्रिया विद्यया च सममेव सम्भावितमिदं कुलमद्यत्वेऽपि काशिकमहाराष्ट्रब्राह्मणेषु प्राधान्येन गण्यते ।

श्रीकृष्णशेषस्य समयस्तु षोडशशतकोत्तरभाग इत्येव कल्पयितुं शक्यते । यतस्तेन स्वकीयं 'कंसवधं' नाम नाटकमकब्बरपादशाहप्रधानसेनापतिटोडरमलपुत्रगिरिधारिनिदेशेन प्रणीतमिति,

"तस्यास्ति तण्डनकुलामलमण्डनस्य
श्रीतोडरक्षितिपतेस्तनयो नयज्ञः ।
नानाकलाकुलगृहं स विदग्धगोष्ठी-
मेकोऽधितिष्ठति गुरुर्गिरिधारिनामा ॥
तेनाहं सबहुमानमाहूय ससमाजेनादिष्टोऽस्मि" ।
इति कंसवधोपोद्घातादवसीयते ।

इत्थं च अकबरसमयात् किञ्चिदनन्तरभावित्वं शेषकृष्णस्य वक्तुं युक्तम् । किञ्च, वैयाकरणसिद्धान्तकौमुदीकर्तु र्भट्टोजिदीक्षितस्य श्रीकृष्णशेषो गुरुरासीदिति,

निर्विशेषं महाशेषाच्छेषकृष्णमहं भजे ।
यो मामशेषाः शेषोक्ती र्विशिष्यैवाध्यजीगपत् ॥

इति सरस्वतीभवनस्थ शब्दकौस्तुभपुस्तकस्थश्लोकेन, पण्डितराजजगन्नाथकृत मनोरमाकुचमर्दनोपोद्घाताच्च निश्चीयते । तथा च भट्टोजिदीक्षितात् किञ्चित्पूर्वभाविनः शेषश्रीकृष्णस्य षोडशशतकोत्तरभागे ऽवस्थितिः कल्प्येत चेन्नैतदयोग्यं स्यात् ।

'शूद्राचारशिरोमणि' रित्याख्यः प्रकृतप्रबन्धस्तु श्रीमता शेषकृष्णेन कस्यचित् 'केशव' तनूजस्य 'पिलाजी इत्याख्यस्य दाक्षिणात्यभूपालस्य प्रार्थनया प्रणीत इति ग्रन्थोपोद्घाते स्वयमेवोक्तमस्ति ।

तथा हि--(ग्रन्थादौ)

अस्ति प्रत्यर्थिपृथ्वीपतिबलजलधिप्राशने कुम्भजन्मा
सन्मानार्हद्विजन्मार्चनपरिचरणप्रीणिताशेषदेवः ।
विष्वद्रीचीनकीर्तिस्फुरदमरसरिद्वीचिनीकृताघ-
प्रोल्लाघस्फारसम्पद्वितरणनिरतः श्रीपिलाजीनृपालः ॥
धर्मानशेषान् विदुषामसौ मुखादाकर्ण्य तत्सङ्करशङ्किमानसः ।
शूद्रोपकारार्थमचीकरत् कृती चतुर्थवर्णोचितधर्मपद्धतिम् ॥
तदर्थनानुरोधेन कृष्णः शेषनृसिंहजः ।
आलोच्य धर्मशास्त्राणि तनुते शूद्रपद्धतिम् ॥ इति ।

ग्रन्थान्ते—

गुणागुणपरीक्षणक्षणविचक्षणोऽनुक्षणं
वितीर्णबहुदक्षिणः स्वजनरक्षणे दक्षिणः ।
जयत्यतुलविक्रमोज्ज्वलितदक्षिणाशामुखः
प्रतिक्षपितशात्रवः क्षितितले पिलाजीनृपः ॥
हरिचरणसरोजावाप्तजन्मा द्विजन्मा-
ऽर्पणविहितविभूतिः स्वर्धुनीपूर्वजन्मा ।
व्यरचयदतियत्नात् केशवस्यात्मजन्मा
सफललघुनिबन्धं शेषकृष्णो मयुज्य ॥ इति च ।

कोऽयं पिलाजीभूपालः ? कुत्रत्यः किं सामयिकश्चेति बहुशो विचारयद्भिरपि नास्माभिः किमप्ययथावन्निश्चेतुमपारि तद्विषये ।

षोडशशतकोत्तरभागो हि शेषकृष्णस्य समय इति पूर्वोक्तैः प्रमाणैर्निश्चितमेव। तस्मिन् समये महाराष्ट्रेतिहासे कोऽपि प्रभावशाली पिलाजी नोपलभ्यते । मुधोलकरभोसलेवंशे सन् १५७८-१५९८ पर्यन्तमेकस्य पिलाजी राजस्योल्लेखो दृश्यते स च न केशवपुत्र इति प्रकृते नोपयुज्यते । अन्ये 'पिलाजी जाधव' 'पिलाजी-गायकवाड' प्रभृतयस्तु प्रसिद्धाः प्रभावशालिनोऽपि पेशवेसमसामयिकाः प्रकृतग्रन्थकर्तुरर्वाचीना इति तैरपि न कार्यसिद्धिः । यदि केचिदितिहासकोविदा अस्मदभीप्सित पिलाजीराजविषये किञ्चिज्जानीयुस्तर्हि तैरदं सानुग्रहं सूचनीयः ।

श्रीमान् श्रीकृष्णशेषस्तु महावैयाकरणः साक्षाच्छेष इव लोके पूज्यतेस्म । अस्य कवित्वमपि लोकोत्तरमासीत् । अनेन काशी-

पुरीपरिसरवर्ति ताण्डवपुराधीशानुजस्य नरोत्तमस्य निदेशेन 'पारिजातहरणचम्पू' निरमायि । महाविदुषाऽनेन विविधेषु शास्त्रेषु विविधा ग्रन्थाः प्रणीताः सन्ति । प्रकृतग्रन्थमालाया २२ संख्यायामेतत्कृता 'धर्मानुबन्धिश्लोकचतुर्दशी' मयैव सम्पादिताऽस्ति । अयं चास्य प्रकाशितो द्वितीयो धर्मशास्त्रनिबन्धः ।

शूद्राचारशिरोमणिः किल लघुरपि गभीरार्थो निबन्धोऽस्ति ।

यद्यपि शूद्रधर्मनिरूपकाः 'शूद्रकमलाकर' 'शूद्रतत्त्व' प्रभृतयः सन्ति भूयांसो निबन्धाः, तथाऽपि लघोरप्यस्य निबन्धस्य तदितरतथाभूतनिबन्धाऽपेक्षया जागर्त्येव महद्वैशिष्ट्यम्, यत्प्रेक्षावद्भिः स्वयं परिशील्यैव ज्ञातुं सुशकम् । पुस्तकद्वयाधारेण प्रकृतसंस्करणं साधितम् । तत्रैकं पुस्तकमत्रत्यमन्यत् भांडारकररिसर्च इंस्टिट्यूट—पूना तः समुपलब्धम् । पुस्तकद्वयमपि खण्डितमासीदिति पर्यवसाने ग्रन्थस्य कश्चिदंशस्त्रुटितएव स्थितः ।

अस्मिन्निबन्धे ग्रन्थकृता प्रतिलोमानुलोमसङ्कराणां सङ्करसङ्कराणां च नामानि, तदुत्पत्तयस्तदाजीविकाश्च सम्यक्सङ्गृहीता इति मयाऽपि पाठकजनसौकर्याय सोंऽशः पृथक्कृत्यात्र संयोजितः । अत्रत्यविषयाणां विशाला सूची चात्र संयोजिताऽस्ति । मन्ये एतावता नव्यधर्मनिबन्धदिदृक्षूणां विदुषां परितोषो भवेदिति ।

प्रकृतग्रन्थसंस्करणे ममाज्ञानवशात् सीसकाक्षरयोजकदोषाद्वा वर्तमानानि स्खलितानि समुदारचेतसो बुधा मर्षयेयुरिति तान् साञ्जलि प्रार्थये ।

सर्वदा मयि सानुग्रहदृशां काशिकराजकीयसंस्कृतपाठशाला-प्रधानाध्यक्षाणां महामहोपाध्याय श्रीगोपीनाथकविराजमहोदयानां, काशिकराजकीयसंस्कृतपरीक्षाध्यक्षाणां डॉ० मङ्गलदेवशास्त्री एम्० ए०, डी. फिल्० महोदयानां च सादरमुपकारभारं स्मारं स्मारं तदनुग्रहेण पूर्णमिमं प्रबन्धं तेभ्यएव समर्प्य विरमामि विस्तरादिति शम् ।



मकरसंक्रान्तिः संवत् १९९२
सरस्वतीभवनम् काशी.

विद्वत्कृपाकांक्षी—
नारायणशास्त्री खिस्ते

* श्रीः *

# शूद्राचारशिरोमणावुक्तानां सङ्करसङ्कराणामुत्पत्तयः, नामानि, आजीविकाश्च यथोक्ताः प्रदर्श्यन्ते—

१ भृज्जुकण्ठः=व्रात्याद्विप्रपत्न्यां जातः ।
२ आवर्तकः=ब्राह्मण्यां भृज्जुकण्ठाज्जातः ।
३ कटधानः=आवर्तात् द्विजभार्यायां जातः ।
४ पुष्पशेखरः=ब्राह्मण्यां कटधानाज्जातः । } विष्णुपूजनम्, नृत्यगीतादि, शङ्ख-वीणादिवादनमेतेषां जीविका ।

५ भोजकः=पुष्पशेखरायां विप्राज्जातः । सूर्यपूजनं जीविका ।

६ देवलकः=भोजकसुतायां द्विजाज्जातः । विष्णुपूजनं जीविका ।

७ आभीरः=माहिष्यायां द्विजाज्जातः । क्षीरविक्रयो जीविका ।

८ उद्बाहः=विप्राद्वैदेह्यां व्यभिचारतो जातः । ( ब्राह्मण्यां वश्याद्वैदेही ) छत्रधारणं, नारीविक्रयणंचास्य जीविका ।

९ चैष्टिकः=विप्रान्निषाद्यां जातः । ( विप्राच्छूद्रायां जातो निषादः ) स्कन्धवहनमस्य जीविका ।

१० विप्रान्मागध्यां जातः=कारागृहस्य गोपनं तज्जीविका । ( क्षत्रियायां वैश्याज्जातो मागधः )

११ अम्बष्ठायां द्विजाज्जातः । कांस्यकर्मकरणं जीविका ।

१२ उग्रायां द्विजाज्जातः । कुम्भकारः ।

१३ मल्लः । नियुद्धम् ।

१४ वैतालिकः । कामशास्त्रेण भाट्टकर्मणा वा जीवनम् ।

१५ कीनाटः । ताम्रकुट्टनम् ।

१६ वणिगजनात् विप्रायां जातः । अन्तःपुरपालनम्,पण्याङ्गनासङ्गमनम् ।

१७ पारशव्यायां महिष्याज्जातः । मालाकरणम् ।

१८ सूताद्वैदेह्यां जातः । सूपकरणम् ।

( ब्राह्मण्यां क्षत्रियात्सूतः । वैश्याद्वैदेहः । )

१९ मैत्रेयुकः । घण्टावादनं मङ्गलगानं च जीविका

(शूद्राद्वैश्यायां जात आयोगवः, वैदेहादम्बष्ठायां जातो हरिमेखलः।)

२० करणादायोगव्यां सैरन्ध्रः । गन्धकर्मकरणं पुष्पचन्दनपण्यादि- (वैश्याच्छूद्रायां करणः ।) शृङ्गारकरणं च जीविका ।

२१ उग्रायां पारशवाज्जाङ्घिकः । पादवेगवान् ।

२२ आरूढपतितात् शैवात् पाशुपतात् शूद्रपत्न्यां जातो भस्माङ्कुरः । शिवार्चनम्, शिवदायेन जीवनम्, शिवाय दत्तेन चण्डीशभागाख्येन जीविका ।

२३ क्षत्रियादुग्रायां क्षेमकः स एव प्रतीहारः । (क्षत्रियाच्छूद्रायामुग्रः)

२४ अम्बष्ठाद्वैदेह्यां जातः कुशीलवः । नर्तनादिकरणं जीविका । (विप्राद्वैश्यायां वैदेही )

२५ आभीराज्जातो निर्मण्डलकः । बाणपिच्छकरणम्, करपत्रैः शराणां रचना च जीविका ।

२६ मागधादुग्रायां जातःकुन्तलो नापितः । श्मश्रुकर्म, क्षौरकर्मकरणम्, नखकर्तनम्, जीविका । अयं शूद्रेभ्योऽधिकः । ( क्षत्रियाच्छूद्रायामुग्रः, क्षत्रियायां वैश्यान्मागधः ) शूद्रकन्यासमुत्पन्नोऽसंस्कृतो ब्राह्मणोऽपि नापितः।स च शूद्रधर्माधिकः।(मन्वनुसारेण)

२७ माहिष्येण करण्यां रथकारः । शिल्पवृत्त्या जीवनम । वचनादस्योपनयनाधिकारः ।

२८ वैदेहान्माहिष्यां कायस्थः। (क्षत्रियाद् वैश्यायां माहिष्यः, वैश्याद् ब्राह्मण्यां वैदेहकः ।) देशजातानां लिपीनां लेखनम्, गणकत्वम्, लिपिलेखनसाधनं चातुर्वर्ण्यं सेवा च जीविका। असौ पञ्चसंस्कारवान् । शिखा, यज्ञोपवीतं, आरक्तवस्त्रं, देवतास्पर्शनं च कायस्थस्य वर्ज्यम् ।

२६ करिण्यां मालाकारात् शालक्यः । मणिरन्ध्रकरणं जीविका । मणिहार इतिख्यातः । स्मृत्यन्तरे मञ्जुरिति संज्ञा ।

३० मञ्जोःकुलाल्यां शाल्मलः । नागवल्लीविक्रयो जविका ।

३१ मालाकारात् क्षत्रियायां शिलीन्ध्रः । मर्दनक्रियो, अङ्गमर्दनं जीविका । शूद्रेभ्यो हीनः ।

३२ शिलीन्ध्रात् क्षत्रियायां कोल्हाटीनामा । बहुरूपीति प्रसिद्धः ।

३३ वैदेहाद्रूपकभार्यायां जातःपुत्र आन्धसिकः । पाचक इति प्रसिद्धः ।

३४ वैश्यात् करण्यां जातो वत्सपालकः ।

३५ कटधानान्मल्लुभार्यायामजापालः ।

३६ सैरन्ध्र्यां क्षेमकात् शय्यापालः । राज्ञां शय्यासंविधाने कुशलः । ( क्षेमकः प्रतीहारी । )

३७ कर्मचण्डालभार्यायां पुष्पशेखराज्जातो मण्डलकः । शुनां मण्डलपोषणं जीविका ।

३८ वद्निीशूद्रसंयोगात् स्यंदोलिकः । असौ चतुर्वर्णविहीनः । मञ्जिष्ठारङ्गकरणं, तेन वाससां चित्रणम्, हस्तलेख्यं ग्रिथितं च तज्जीविका । स एव सौचिकः । कर्त्तरीसूचीकर्तनं जीविका ।

३९ शूद्र्यां निषादाज्जातः कुक्कुटः । स एव टङ्कशालकः । रङ्गशालासु नाटकानां विधानम्, अष्टधातूनां व्यवसायश्च जीविका । अयमन्त्यजैः समः ।

४० मागध्यां क्षत्रियादुल्मुकः ।=लोहकर्मकारी । अयं चातुर्वर्ण्यात् हीनः । अन्त्यजादुत्तमः ।

४१ उग्रात्पारशवापुत्रो मौःकलिः तैलिकः । (उग्राद्वैदेह्यां जातो रजकः।) ( क्षत्राच्छूद्रायामुग्रः, ब्राह्मण्यां वैश्याद्वैदेही ) तैलिकोऽन्त्यजातिभ्य उत्तमः । शुद्धतैलविक्रयोऽस्य जीविका । तिलहिंसायन्त्रशब्दश्रवणेन पापं भवतीति मौःकलिको नगराद्बहिर्निवास्यः ।

४२ रथकारस्त्रियामायोगवात् सूत्रधारः। असौ जायाजीवः शैलूषः नाट्य शास्त्रज्ञः। जलमण्डपिकादीनि सूत्राणि रचयेत्। नगराद्बहिर्निवासोऽस्य।

४३ सूतात् कुक्कुट्यां कुरविन्दः। पट्टांशुके रतः। अन्त्यजधर्माचारः।

४४ वेन्यामावर्तकादम्बर सूत्रवायकः। ( वेन्या नट स्त्री )

४५ आभीर्यां कुक्कुटात्पुत्रः सौवीरः।=कोसटः। सर्वजातीनां वस्त्रकरणं जीविका।

४६ तद्वैपरीत्याज्जातो नीलीकर्ता।

४७ कुन्तलान्मञ्जुभार्यायां जातो वर्वरः।

४८ मैत्राज्जाङ्गिकायां वन्धुलः, स एव मालकः।

४९ कैवर्त्यां पौष्टिकात्पांशूलः=शणवायकः।

५० ऋजुकण्ठाच्छागल्यां औरभ्रो मेषपालकः।

५१ क्षेमकादिङ्गुभार्यायामावर्त उष्ट्रपालकः।

५२ मल्लात् देशिकायां रौमिकः। लवणकर्म तज्जीविका।

५३ द्विजादायोगव्यां धिग्वणः। कवचादिकरणं जीविका, चर्मणाऽश्वपल्याणकरणम्। मोची इति प्रसिद्धः।

५४ वैदेहकात् कार्वोलिकायां मेदसंज्ञकः। वृक्षारण्य पर्वतेषु निवासेन जीविका। गोंड इति प्रसिद्धः।

५५ पारशवादायोगव्यां कैवर्तः सर्वजातिभ्यो हीनः। जालेन मत्स्यघातः। नौकाप्रवहणं चास्य जीविका।

५६ यतेर्विधवायां जातः कर्मचण्डालः। वापी कूपादि मृत्कर्मकरणं तज्जीविका। असौ स्पृश्यएव।

५७ निषादाच्छूद्रपत्न्यां जातः पुक्कसः। अन्त्यजसदृशः। अरण्यजीवघातेन तद्वृत्तिः।

५८ निषादात् धिग्वण्यां चर्मकारः। अन्त्यजातिभ्यो हीनः, उपानहां शिरस्त्राणस्य च करणेन गोमहिषीचर्मणा च तज्जीवनम्।

५९ वेनाद्राभीर्यां शौरिडकः । शौष्कल इत्यपि । असावधमः सर्वधर्मं बहिष्कृतः, सुराविक्रयोऽस्य जीविका ।

६० जाङ्गिकात् कैवर्त्यां मञ्जुष्ठः (रजकः) खटकानां चूर्ण कृत्वा पाचनेन तज्जीविकाः । अयमस्पृश्यः ।

६१ धिग्वणात् कुम्भकार्यां चित्रकरः। चित्रलेखनं जीविका। वर्णावाह्यः।

६२ वैशिकात् कुरुविन्दायां किंशुकः । लेपकर्मकृत् । अयमन्त्यजः । वंशपात्रविक्रयोऽस्य जीविका ।

६३ कर्मचाण्डालकात् वैदेह्यां बुरुडजातिः । वंशविदारणं कर्म ।

६४ निषादा द्वैदेह्यां गारुडः । समान्त्यजसधर्मा ।

६५ आयोगवात धिग्वण्यां दुर्लभः । करपत्रकरणं जीविका । असावन्त्यजमुख्यः ।

६६ चाण्डालात् कैवर्त्यां सौनिकः। अजमेषादिर्हिंसा, तन्मांसविक्रयो जीविका ।

६७ शौण्डिक्यां डिण्डिमात् कीनाशः ।

६८ चाण्डालात् पुक्कस्यां श्वपाकः । श्वमांसपचनं जीविका ।

६९ निषाद्यां चण्डालाज्जातः डोंबसंज्ञः । मृताश्वखरहरणं जीविका । श्मशाने वासः ।

७० शैलन्ध्रैर्मेदयोषित्सु म्लेच्छजातय उत्पन्नाः ।
म्लेच्छाः मन्वनुसारेण । १ पौड्रक २ चोड् ३ द्राविड ४ काम्बोज ५ यवन ६ शक ७ पारद ८ वाह्लीक ९ चीन, १० किरात ११ दरद इत्यादयः ।

एतेषामपि 'जात्युत्कर्षो युगे ज्ञेयः' इतियाज्ञवल्क्यानुसारेण शोभनैः कर्मभिर्जन्मान्तरे, जात्युत्कर्षो भवितुं शक्नोति ।



* श्रीः *

# ॥ शूद्राचारशिरोमणौ विषयानुक्रमणिका ॥



प्रथमपरिच्छेदसमाप्तिः ।



## द्वितीयपरिच्छेदारम्भः ।

ग्रन्थसमाप्तिः ।



हुतिमन्त्राश्च स्वाहान्ता एव ब्राह्मणैः पठनीयाः। शूद्रस्तु तूष्णीमेव नम इति वा जपन्तत्कर्म कुर्यादित्याहुः।

अत्र व्यासः—

चतुरस्रं त्रिकोणं च वर्तुलं चार्द्धचन्द्रकम्।
कर्त्तव्यमानुपूर्व्येण ब्राह्मणादीनां तु मण्डलम्॥

शङ्खः—

चतुःकोणं द्विजस्य स्यात् त्रिकोणं क्षत्रियस्य तु।
मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं मतम्॥

भविष्यत्पुराणे—

भोजनात्किञ्चिदन्नाऽग्रं धर्मराजाय वै बलिम्।
चित्राय चित्रगुप्ताय प्रेतेभ्यश्च बलिं हरेत्॥

मनुः—

भुक्तवत्सु तु विप्रेषु स्वेषु भृत्येषु वै बहिः।
भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती॥

बर्ज्यान्यासनान्याह प्रचेताः—

गोशकृन्मृन्मयं पित्तं तथा पालाशपिप्पलम्।
लोहवत्तु सदैवार्कं वर्जयेदासनं बुधः॥

आत्रिः—

आसने पादमारोप्य यो भुङ्क्ते ब्राह्मणः क्वचित्।
मुखेन चान्नमश्नाति तुल्यं गोमांसभक्षणम्॥

हारीतः—

न कार्ष्णायसे न मृत्पात्रे न भिन्नेऽवकीर्णे इति ।

कार्ष्णायसं लौहम् । अवकीर्णं शूद्रभोजनादिदूषितम् ।

वृद्धमनुः—

ताम्रपात्रे न भुञ्जीत भिन्नकांस्ये मलाविले ।
पलाशपत्रपद्मेषु गृही वैश्वदेवं चरेत् ॥
ब्रह्मचारियतीनां तु चान्द्रायणफलं लभेत् । इति ॥

पद्मपुराणे—

भोजनाद्ब्रह्मपत्रेषु कपिलादुग्धपानतः ।
व्रतं विना मुनिश्रेष्ठ शूद्रो नरकमाप्नुयात् ॥
अज्ञानाद् भुञ्जते ब्रह्मपत्रेषु द्विजसत्तम ।
व्रतं विनापि शूद्रो यो गां दत्वा स विशुध्यति ॥

नृसिंहांघ्रिमहोदधौ—

करञ्जपिप्पलवटवृक्षकुम्भ्यर्कतिन्दुकाः ।
एषां पत्रेषु नाश्नीयात्कोविदाराम्रयोरपि ॥
विपर्यस्तेषु पत्रेषु तिर्यक्पत्रेषु दारुजे ।
अजपी ब्रह्मपत्रेषु शूद्रस्यूते तदाहृते ॥
कण्टकैः सीविते पत्रे तथा वेणुतलेन च ।
वल्लीपलाशपत्रेषु स्थलजे पौष्करे तथा ॥
गृहस्थश्चेत्समश्नीयाच्छुध्यै चान्द्रायणं चरेत् ।

एक एव तु यो भुङ्क्ते विमले कांस्यभाजने ॥
चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशो बलम् ।
यत्यादीनां तन्निषिद्धम् ।
ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ॥
इति प्रचेतःस्मरणात् ।

व्यासः—

पञ्चार्द्रो भोजनं कुर्यात्प्राङ्मुखो भोजनमास्थितः ।
हस्तौ पादौ तथैवास्यमेषां पञ्चार्द्रता मता ॥

सकामं प्रति मनुः—

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुंक्ते उदङ्मुखः ॥

ब्रह्मपुराणे—

यस्तु पाणितले भुंक्ते यस्तु फूत्कारसंयुतम् ।
प्रसृताङ्गुलिभिर्यश्च तस्य गोमांसवच्च तत् ॥

सङ्ग्रहे—

पुत्रवान् स्वगृहे नित्यं नाश्नीयादुत्तरामुखः ।
सोमवारे तथाऽभ्यङ्गं वर्जयेत्तु सदा बुधः ॥ इति ।

ब्रह्मपुराणे—

अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः ।

अस्माकं नित्यमस्त्वेतादिति भक्त्या च वन्दयेत् ॥

विष्णुपुराणे—

अश्नीयात्तन्मयो भूत्वा पूर्वं तु मधुरं रसम् ।
लवणाम्लौ तथा मध्ये कट्वतिक्तादिकांस्ततः ।
प्राक् द्रवं पुरुषोऽश्नन्वै मध्ये तु काठिनाशनः ॥
अन्ते पुनर्द्रवाशी च तदारोग्यं न मुञ्चति ।

ब्रह्मपुराणे—

सर्वाङ्गुलीभिरश्नीयान्नावधूनेत्करं क्वचित् ।
कुर्यात्क्षीरान्तमाहारं न च पश्चात्पिबेद्दधि ॥
जठरं पूरयेदर्द्धमन्नैर्भागं जलस्य च ।
वायोः संवरणार्थाय चतुर्थमवशेषयत् ।
अथैकपङ्क्त्यां नाऽश्नीयात्संवृतः स्वजनैरपि ॥
को हि जानाति किं कस्य प्रच्छन्नं पातकं महत् ।
अवर्जनीयत्वे तु पंक्तेः किञ्चिद्भेदं कृत्वा भोक्तव्यम् ॥

पंक्तिभेदकान्याह वृहस्पतिः—

अग्निना भस्मना चैव स्तम्भेन सलिलेन च ।
द्वारेण चैव मार्गेण पंक्तिभेदो बुधैः स्मृतः ॥

अत्राऽन्यो विशेषो भक्त्याभक्त्यादिविभागश्च गोविन्दार्णवाह्निके द्रष्टव्यः ।

पैठीनसिः—

लवणं व्यञ्जनं चैव घृतं तैलं तथैव च ।
लेह्यं पेयं च विविधं हस्तदत्तं न भक्षयेत् ॥
दर्व्या देयं भृतान्नं तु समस्तव्यञ्जनानि च ।
उदकं यच्च पक्वान्नं वा दर्व्या दातुमिच्छति ॥
स भ्रूणहा सुरापश्च स स्तेनो गुरुतल्पगः ।

मनुः—

पृथक् पानं पुनर्दानं सामिषं पयसा निशि ।
दन्तच्छेदनमुष्णं च सप्त शत्रुषु वर्जयेत् ॥

आश्वमेधिके—

उदक्यामपि चण्डालं श्वानं कुक्कुटमेव च ।
भुञ्जानो यदि पश्येत्तु तदन्नं तु परित्यजेत् ॥

गौतमः—

काहलभ्रमणं पानकक्रकचोलूखलस्य च ।
एतेषां निनदो यावत्तावत्कालमभोजनम् ॥

आपस्तम्बः—

द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी गृही तथा ।
मुनेरन्नमभोज्यं स्यात्सर्वेषां लिंगिनां तथा ॥

मुनिरत्र वानप्रस्थो यतिश्च । लिङ्गिनः कापालिकादयः ।

अंगिराः—

षण्मासान्यो द्विजो भुंक्ते शूद्रस्यान्नं विगर्हितम् ।
स तु जीवन्भवेच्छूद्रो मृतः श्वा चाभिजायते ।
परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते ।
वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजनम् ॥ इति ।

तथा,

अमृतं ब्राह्मणस्यान्नं क्षत्रियस्य पयः स्मृतम् ।
वैश्यस्यत्वन्नमेवान्नं शूद्रस्य रुधिरं स्मृतम् ॥

एवं समान्यतः शूद्रस्य पक्वान्नसाधारणस्याभोज्यत्वे प्राप्ते कांश्चिदनुजानाति याज्ञवल्क्यः—

शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः ।
भोज्यान्ना नापितश्चैव यश्चाऽऽत्मानं निवेदयेत् ॥

दासो गर्भदासः । अर्द्धसीरी कृषिफलार्द्धग्राही । एषामपि स्वधर्म्मभ्रष्टानामाममेव भोज्यं न पक्वम् । यदाह मनुः—

नाऽद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः ।
आददीताममेवान्नं तस्यादावेकरात्रिकम् ॥

एकरात्रिकं एकाहपर्याप्तम् । अश्राद्धिन इति स्वविहितकर्मभ्रंशोपलक्षणार्थम् । अश्राद्धिन इति विशेषणात्स्वधर्म्मरतस्य शूद्रस्य पक्वान्नमपि भोज्यमिति गम्यते ।

तदपि नियमयति हारीतः—

कन्दुपक्वं स्नेहपक्वं पायसं दधिसक्तवः।
एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत् ॥

लौहकटाहः कन्दुः।

एवं, गोरसञ्चैव सक्तूँश्च तैल्यं पिण्याकमेव च।
अपूपान्भक्षयेच्छूद्राद्यच्चान्यत्पयसा कृतम् ॥

इति सुमन्तुवचनम्।

सम्प्रोक्ष्य विप्रो गृह्णीयाच्छूद्रान्नं गृहमागतम्।

इति विष्णुपुराणवचनं च परिगणितशूद्रविषयम्। शूद्रस्य न कदाचनेत्यादिनिषेधवचनं चेतरशूद्रविषयम्। अनापद्विषयं च।

तथा च याज्ञवल्क्यः—

अदत्वाऽप्यग्निहीनस्य नान्नमद्यादनापदि। इति।

अग्निहीनः शूद्रः। अत्रेदं कल्पतरुसिद्धान्तसर्वस्वम्।

अविशेषेण शूद्रस्य पक्वमपक्वं वान्नमभोज्यम्। आपदि त्वाममेवैकाहिकं ग्राह्यम्। दासादीनां तु अनापद्यपि आमं ग्राह्यं आपदि पुनः पक्वमपि। कैन्दुपक्वादि तु शूद्रमात्रस्य भोज्यमिति। भोज्यान्नता चेयं युगान्तरएव।

शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम् ।

भोज्यान्नता गृहस्थस्येति कलियुगवर्ज्यप्रकरणे कालखण्डे क्रतुवचनात् इति मर्यादा। आश्वमेधिके—

पानीयानि पिवेद्येन तत्पात्रं द्विजसत्तम ।
अनुच्छिष्टं भवेत्तावद्यावद्भूमौ न निःक्षिपेत् ॥

अत्र स्मरन्ति—

सर्पिर्भुक्त्वा तु यो विप्रस्तस्मिन्पात्रे पिवेज्जलम् ।
जलपात्रे च यो भुंक्ते आसुरं तत्प्रकीर्त्तितम् ॥ इति ।

## अथ भोजनोत्तरकर्म ।

**देवलः—**

भुक्त्वोच्छिष्टं समादाय सर्वस्मात्किंचिदाचमेत् ।
उच्छिष्टभागधेयेभ्यः सोदकं निर्वपेद्भुवि ।

मन्त्रोपि, रौवे पुण्यनिलये पक्ष्मार्बुदनिवासिनाम् ।
प्राणिनां सर्वभूतानामक्षय्यमुपतिष्ठताम् ॥

**व्यासः—**

अर्द्धं पीत्वा तु मण्डपमर्द्धं त्याज्यं महीतले ।
रसातलगतान्नागांस्तेन प्रीणाति नित्यशः ॥

**तथा,**

तस्मिन्नाचमनं कुर्याद्यत्र भाण्डे च भुक्तवान् ।
यद्युत्तिष्ठत्यनाचान्तो भुक्तवानाचमेत्ततः ॥

स्नानं सद्यः प्रकुर्वीत सोऽन्यथा पतितो भवेत् ।

एवमन्तर्भुक्त्वा गृहाद्बहिराचमनं देशाचारमात्रं न पुनर्युक्तम् ।

कौर्मे—

आचम्याङ्गुष्ठपानीयं पादाङ्गुष्ठे तु दक्षिणे ।
निःस्रावयेद्धस्तजलमूर्ध्वहस्तः समाहितः ॥
हुतानुमन्त्रणे कुर्याच्छ्रद्धायामिति मन्त्रतः ।

निःस्रावणे मन्त्रमाह बौधायनः—

अङ्गुष्ठमात्रः पुरुषो ऽङ्गुष्ठं चैव समाश्रितः ।
ईश्वरः सर्वजगतस्तेन प्रीणातु विश्वभुक् ॥

अयं च मन्त्रः शूद्रस्य न भवति स्मार्त्तत्वात् ।

व्यासः—जानुनी स्पृश राजेन्द्र भर्त्तव्या बहवो यदि ।

ब्रह्मपुराणे—संमार्ज्य जानुबाहू च गोप्रदानफलं लभेत् ।

विष्णुपुराणे—ततः प्रशान्तचित्तस्तु कृतासनपरिग्रहः ।
अभीष्टदेवतानां च कुर्वीत स्मरणं नरः ।

ब्रह्मपुराणे—

आचान्तोऽप्यशुचिस्तावद्यावत्पात्रमनुद्धृतम् ।
उद्धृतेऽप्यशुचिस्तावद्यावन्नो मृज्यते मही ।

अत्रिः—भूमावपि हि लिप्तायां तावत्स्यादशुचिः पुमान् ।
आसनादुत्थितस्तावद्यावन्न स्पृश्यते मही ।

## अथ ताम्बूलविधिः ।

मार्कण्डेयः—

भूयोऽप्याचम्य कुर्वीत ततस्ताम्बूलभक्षणम् ।

वसिष्ठः—

सुपूगं च सुपत्रं च चूर्णेन च समन्वितम् ।
अदत्वा द्विजदेवेभ्यस्ताम्बूलं वर्जयेद् बुधः ॥
एकपूगं सुखारोग्यं द्विपूगं निःफलं भवेत् ।
अतिश्रेष्ठं त्रिपूगं स्यादधिकं चैव दुष्यति ॥
पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः ।
चूर्णपर्णं हरेदायुः शिरा बुद्धिविनाशिनी ॥
तस्मादग्रं च मूलं च शिरां चैव विशेषतः ।
चूर्णपर्णं वर्जयित्वा ताम्बूलं चर्वयेद् बुधः ॥
पर्णाग्रे पर्णमूले च चूर्णपर्णं द्विपर्णकम् ।
तदधावनपर्णं च शक्रस्यापि श्रियं हरेत् ॥
अनिधाय मुखे पर्णं पूगं खादति यो नरः ।
सप्तजन्मदरिद्रत्वमन्ते विष्णुं च न स्मरेत् ॥
तर्जन्यां चूर्णमादाय ताम्बूलं तु न खादयेत् ।
यदि खादयते मूढो रौरवं नरकं व्रजेत् ॥
रात्रौ खदिरताम्बूलं प्रमादेन कृतं यदि ।
यावज्जन्मदरिद्रत्वं भविष्यति न संशयः ॥

ब्रह्मचारी यतिश्चैव विधवा च रजस्वला ।
प्रत्येकं मांसतुल्यं तन्मिलितं सुरया समम् ॥

अथ दक्षः—

भुक्त्वा च सुखमास्थाय तदन्नं परिणामयेत् ।
इतिहासपुराणाभ्यां षष्ठसप्तमकौ नयेत् ॥
अष्टमे लोकयात्रा च बहिः सन्ध्या ततः पुनः ।

याज्ञवल्क्योऽपि—

अहःशेषं सहासीत शिष्टैरिष्टैश्च बन्धुभिः ।

एवं दिनशेषं समाप्य सन्ध्याकाले व्यतीते रात्रावपि वैश्वदेवं कृत्वा सति सम्भवे अतिथिपूजां विधाय बुभुक्षा चेदस्ति तर्हि रात्रावपि भुञ्जीत ।

केचन वैश्वदेवं रात्रौ नेच्छन्ति ।

ततः कृतकर्त्तव्यः शयीत । तदुक्तं विष्णुपुराणे—

कृतपादादिशौचश्च भुक्त्वा सायं ततो गृही ।
गच्छेच्छय्यामस्फुटितां ततो दारुमयीं नृप ॥

शङ्खः—

न विशीर्णायां खट्वायां नान्यवर्णोपसेवितायां अनभ्युक्ष्य च ।

पैठीनसिः -

अतैलाभ्यक्तशिराः स्वपेत् । नादीक्षितः चर्मणि सुप्यात् ।

विष्णुः—

नार्द्रवासाः स्वपेत् । न पालाशशयने न पञ्चदारुकृते न गजभग्नकृते न विद्युद्दग्धे नाग्निप्लुष्टे न वालमयीं शय्यामधितिष्ठेदनास्तृतामिति ।

पञ्चदारुः पञ्चविधं काष्ठं तेन कृते । गजभग्नो गजदन्तः ।

तथा, निद्रां सम्यगनासाद्य ताम्बूलं वदनात्त्यजेत् ।

पर्यङ्कात्प्रमदां भालात्पुण्ड्रं पुष्पाणि मस्तकात् ।
गदप्रमादयक्ष्मा हि भयदाः सर्वदा इमे ॥

मार्कण्डेयः—

प्राक्शिराः शयने विद्याद्धनमायुश्च दक्षिणे ।
पश्चिमे प्रबला चिन्ता हानिर्मृत्युस्तथोत्तरे ॥

गार्ग्यः—

स्वगृहे प्राक्शिराः शेते श्वाशुरे दक्षिणाशिराः ।
प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः ॥
अत्र दिवाविहितकर्म्मणां दैवादतिपाते स्मर्यते ।
दिवोदितानि कर्म्माणि प्रमादादकृतान्यपि ॥
शर्वर्याः प्रथमे यामे तानि कुर्याद्यथाक्रमम् ।

संग्रहे—

शर्वर्याः प्रथमे यामे दिवा कर्म्माणि कारयेत् ।

ब्रह्मयज्ञं च सौरं च वर्जयेद्धि विशेषतः ॥

सौरं सूर्यसूक्तजपादि ।

तथा, वैश्वदेवं तथा रात्रौ कुर्याद्बलिहुतिं तथा ।

महतः पञ्च यज्ञांस्तु दिवैवेत्याह गौतमः ।

अत्रान्ये विशेषा गोविन्दार्णवे द्रष्टव्याः ।

इत्याह्निकविधिः ।

शिष्टानामवधिर्गुणैकजलधिः सत्सम्पदां शेवधिः
श्रीमत्केशवदासतः समजनि श्रीमान्पिलाजीति यः ।
तस्यैतस्य कृते कृतेऽत्र कृतिना कृष्णेन शेषेण स –
च्छूद्राचारशिरोमणावहरहःकृत्ये विवेको ऽभवत् ॥

इति श्री शूद्राचारशिरोमणौ आह्निक-
विवेकः समाप्तः ।

शूद्रस्याशौचविषये तु –

बौधायनः –

शुध्येद्विप्रो दशाहेन द्वादशाहेन क्षत्रियः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ।

विष्णुरपि –

ब्राह्मणस्य जननमरणयोर्दशाहमाशौचं, द्वादशाहं राजन्यस्य, पञ्चदशाहं वैश्यस्य, मासं शूद्रस्येति ।

देवलः—

शूद्रस्य त्रिंशता शुद्धिरिति । एतदसच्छूद्रपरम् ।

'शुद्रस्तु मासमासीत निजकर्मविवर्जितः' इति मार्कण्डेयवचनात् । निजकर्म पञ्चमहायज्ञं द्विजशुश्रूषातदुच्छिष्टभोजनमासिकवपनादि । तद्युतस्तु न्यायवर्त्तिसच्छूद्रापरपर्यायस्य पञ्चदशाहमेवाशौचम् ।

तदाह याज्ञवल्क्यः—

क्षत्रस्य द्वादशाहानि विशां पञ्चदशैव तु ।
त्रिंशद्दिनानि शूद्राणां तदर्द्धं न्यायवर्त्तिनामिति ॥

मनुनाऽप्युक्तम्—

शूद्राणां मासिकं कार्यं वपनं न्यायवर्त्तिनाम् ।
वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टं च भोजनमिति ॥

वैश्यवदिति । पञ्चदशाहमित्यर्थः ।

यत्तु शातातपः—'शूद्रो विंशतिरात्रेण शुध्यते मृतसूतके' इति तत्तु किंचिदपकृष्टसच्छूद्राविषयम् । अपकृष्टता च पञ्चमहायज्ञाद्यनुष्ठानमन्तरेण द्विजशुश्रूषामात्रपरत्वेन बोध्या ।

यत्त्वाङ्गिरसोक्तम् । एतदत्यन्तसद्वृत्ताचारवैराग्यादिसम्पन्नसच्छूद्रविषयतया योज्यम् ।

अन्ये तु शूद्रमात्रस्य विंशतिरात्रपक्ष आपत्कल्पः ।

दशाहपक्षस्तु सच्छूद्रस्याप्यापत्कल्प इत्याहुः । देशाचारेण व्यवस्थेत्यन्ये । अयं च सर्वेषामप्याशौचसंकरो युगान्तरविषयः। यथा चोक्तं हेमाद्र्युदाहृतादित्यपुराणे—कलियुगवर्ज्यान्यनुक्रम्य–वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथेत्यनन्तरम् — कलौ युगे त्विमान् धर्मान्वर्ज्यानाहुर्मनीषिणः इति ।

एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः ।
त्र्यहात्केवलवेदस्तु निर्गुणो दशभिर्दिनैरित्यादिना ।

तथा,

चत्वार्यधीतवेदानामहान्याशौचमिष्यते ।
वेदाग्नियुक्तविप्रस्य त्र्यहमाशौचमिष्यते ॥
एताभ्यां श्रुतयुक्तस्य दिनमेव विधीयते ।
एतैः सार्कं कर्मयुक्तः सद्यः शुध्येदसंशयः ॥
एतैर्युक्तस्य राज्ञस्तु द्वादशैकादशा दश ।
वैश्यस्यैव पञ्चदश द्वादशैकादश क्रमात् ॥
अर्द्धमासं तु शुश्रूषाः शूद्रस्याशौचमिष्यते ।

इत्यादिना देवलादिभिर्यदघसङ्कोचनमुक्तं तत्कलौ न कार्यमित्यर्थः ।

वृत्तमश्वस्तनिकत्वं त्र्यहैहिकत्वाग्निशुश्रूषादि ।
स्वाध्यायो वेदाध्ययनादि तद्धेतुकम् ॥

तेन कलौ दशाहद्वादशाहपञ्चदशाहमासपक्षा एव चातुर्वर्ण्यस्य क्रमाद्भवन्तीत्यर्थः ।

तदाह हारीतः—

दशाह एव विप्रस्य सपिण्डमरणे सति ।
कल्पान्तराणि कुर्वाणः कलौ मुह्यति किल्बिषीति ।

विप्र इत्युपलक्षणम् । तद्वद्वर्णानाम् ।

अत एव शातातपः—

मन्त्रावश्यवर्जनाच्छूद्रस्य नाधिकारो न प्रतिषेधो मासमित्येके इति । कदर्यादेस्तु ब्राह्मणादिवदेवाशौचम् ।

यदाह दक्षः—

व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा ।
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ।
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः ॥
श्राद्धत्यागविहीनस्य अश्मान्तं सूतकं भवेत् ।
न शौचं तु कदाचित्स्याद्यावज्जीवं तु सूतकमिति ॥

व्याधिरचिकित्स्यः । कदर्यो देवलेनोक्तः—

आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् ।
लोभाद्यः पितरो भृत्यान्स कदर्य इति स्मृतः। इति ।

ऋणग्रस्तोऽपरिहार्यऋणः । सङ्करेषु तु ब्रह्म-

पुराणम् —

शौचाशौचं प्रकुर्वीरन् शूद्रवर्णसङ्करा इति। जननाशौचे तु शूद्रस्य कर्मानधिकारो यावदाशौचम्। अस्पृश्यत्वं तु सूतिकाया एव दशाहम्।

पिता तु स्नानमात्रेण स्पृश्यो भवति।

यदाहाऽङ्गिराः —

सूतके सूतिकावर्जमङ्गस्पर्शो न दुष्यति।
संस्पर्शे सूतिकायाश्च स्नानमेव विधीयते॥

संवर्त्तोऽपि —

जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते।
माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः॥

शुध्येत्स्पर्शार्हा स्यादित्यर्थः। कर्माधिकारस्तु मासान्तएवेति। एतच्च पितुः स्पृश्यत्वं सूतिकासम्पर्काभावे। तस्मिंस्तु सति सूतिकावद्दशाहानन्तरमेव।

तदाह पराशरः —

यदि पत्न्यां प्रसूतायां द्विजः सम्पर्कमिच्छति।
सूतकं तु भवेत्तस्य यदि विप्रः षडङ्गवित्॥

द्विज इत्युपलक्षणम्।

यदि विप्र इत्यपि कैमुतिकन्यायः।

तेन शूद्रेऽप्येतत्समानं तुल्यन्यायत्वात्। सपत्नमा-

तृष्वप्याह ब्रह्मपुराणम्—

अथान्या मातरस्तद्वत्तद्गृहं न व्रजन्ति चेत् ।
सपिण्डाश्चापि संस्पृश्याः सन्तः सर्वेपि नित्यशः ॥

तद्वत् पितृवत् । यदि तद्गृहं सूतिकागृहं गत्वा तान् स्पृशेयुस्तदा स्नानमात्रेण स्पृश्याः । अथ ताः स्पृशेयुस्तदा पितृवदेव दशरात्रस्पृश्या इत्यर्थः । सूतिकायाः स्पर्शाधिकारमाह प्रचेताः—

सूतिका सर्ववर्णानां दशरात्रेण शुध्यति ।
ऋतौ तु न पृथगाशौचं सर्ववर्णेष्वयं विधिः ॥

सर्ववर्णेष्विति वचनाच्छूद्राया अपि दशरात्रेणैव । ऋतुनिमित्तं तु ब्राह्मण्यादेरेव त्रिरात्रमेव न पृथगाशौचमिति वचनात् ।

यत्तु ब्रह्मपुराणे—

ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः ।
गतैः शूद्रा च संस्पृश्या त्रयोदशभिरेव च । इति ।

तदसच्छूद्रविषयम् ।

अस्याः कर्माधिकारमाह पैठीनसिः—

सूतिकां पुत्रजननीं विंशतिरात्रेण स्नातां कर्म्माणि कारयेन्मासेन स्त्रीजननीमिति । कर्म्माणि दैवानि पित्र्याणि च । शूद्रायास्तु कर्मयोग्यता पुत्रजनने स्त्री-

जनने वा मासापगमेनैव भवतीति मदनपालः।

युक्तं चैतत्। तस्या मासाशौचे विंशतिरात्रे कर्माधिकारविरोधात्।

शावाशौचेऽपि स्पर्शकालमाहाङ्गिराः—

दशमेऽहनि शूद्रस्य कार्यमस्पर्शनं बुधैः।
मासेनैव तु शुद्धिः स्यात्सूतके मृतके तथा॥

संवर्त्तः—

चतुर्थेऽहनि विप्रस्य षष्ठेह्नि क्षत्रियस्य च।
अष्टमे दशमे चैव स्पर्शः स्याद्वैश्यशूद्रयोः॥

देवलः—

आशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः।
शूद्रविट्क्षत्रविप्राणां यथा शास्त्रप्रदर्शनात्॥
त्रिचतुःपञ्चदशाभिः स्पृश्या वर्ण्याः क्रमेण तु।
भोज्यान्नो दशभिर्विप्रः शेषा द्वित्रिषडुत्तरैः॥

अत्र षडुत्तरैर्दशभिरित्येतन्न्यायवर्त्तिशूद्रविषयम्। एवं द्वादशरात्राद्याशौचपक्षेऽपि त्रिभागकल्पनेनाद्यभागमतीत्यैव स्पर्शनीयतेति ध्येयम्।

स्रावपातयोराशौचे विशेषमाह मरीचिः—

स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम्।
पाते मातुर्यथामासं पित्रादीनां दिनत्रयम्॥

मासत्रयमध्ये गर्भस्य स्रसनं स्रावस्तस्मिन्सति मातुस्त्रिरात्रमाशौचं सपिण्डानां तु पित्रादीनामाशौचं न भवतीत्यर्थः । पितुस्तु स्नानमात्रं भवतीत्याह वृद्धपराशरः । गर्भस्रावे मासतुल्या रात्रयः स्त्रीणाम् । स्नानमेव पुरुषस्येति । पुरुषस्य पितुरित्यर्थः । मासतुल्या रात्रय इति तु पातविषयम् ।

स्रावपातौ लक्षयति लघुपराशरः—

आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ।
अतऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेदिति ॥

एतच्च स्रावे त्रिरात्रवचनं ब्राह्मणविषयम् । इतरेषु तैनैव विशेषाभिधानात् । तद्यथा—

[ अत्र ग्रन्थस्त्रुटितः प्रतिभाति । उपलब्धादर्शपुस्तकद्वयेऽपि तावतोंऽशस्यानुपलब्धेर्यथालब्धएव ग्रन्थः प्रकाश्यते । ]

उभयोः जन्ममरणयोः तेनायमित्यर्थः । एकेन ब्राह्मणादिना आनुलोम्येन नानावर्ण्यासु स्त्रीषु जनितानां नानावर्ण्यानां भ्रातॄणां मध्ये यदन्यजातीयस्य भ्रातृजननमरणनिमित्तकमन्यजातियस्य भ्रातुरापतति तज्जीवति पितरि पैतृकं पितृवर्णोदितं यदशौचं दशरात्रषड्रात्रादिकं तत्पुत्राणां भवति । तस्मिन्मृते मातृव-

र्णोचितम् । उभयोरपि मृतयोः सतोर्यस्य जन्ममरणे वृत्ते तज्जात्युक्तमेव सर्वेषां भ्रातॄणां तत्स्यादिति विष्णुः । पत्नीनां दासानामानुलोम्येन स्वामितुल्यमाशौचं मृते स्वामिन्यात्मीयम् । आनुलोम्येनापकृष्टवर्णपत्नीनामपकृष्टवर्णदासानां चोत्कृष्टवर्णस्वामितुल्यमाशौचम् । उत्कृष्टवर्णपत्न्यादीनां च प्रातिलोम्येन स्वाशौचमेवेत्यर्थः । एतच्च स्वामिना सह एकग्रामवासे ।

यदाह बृहस्पतिः—

दासान्तेवासिभृतकाः शिष्याश्चैकत्रवासिनः ।
स्वामितुल्येन शौचेन शुध्यन्ति मृतसूतके ॥

अन्तेवासी नैष्ठिकब्रह्मचारी । शिष्यस्य पृथगुपात्तत्वात् ।

शङ्खः—

हीनवर्ण्या तु या नारी प्रमादात्प्रसवं व्रजेत् ।
प्रसवे मरणे तज्जमाशौचं नोपशाम्यति ॥

हीनवर्ण्या शूद्रा । प्रमादात् । रागकृतपरपुरुषसंसर्गात् ।

अयं भावः । अविवाहितशूद्रा तावदन्तिमवर्णेन सह समासाद्य यदि प्रसूता भवति, तदा तत्प्रसवमरणे च गर्भोत्पादयितुर्यावज्जीवं सूतकित्वमित्यर्थः ।

असवर्णमातृजन्येषु शङ्खः—

यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः ।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु ॥

एकस्माद्ब्राह्मणादेर्जाताः पृथक्पृथगाशौचाः, मातृजातीयमेव तेषामाशौचम् । तेषां च त्रिपुरुषमेव सापिण्ड्यम् । तेन चतुर्थ्यादिपुरुषजननमरणयोर्न सपिण्डनिमित्तमाशौचादीति ।

केचिच्च पृथक्जना इत्यत्र पृथक्धना इति पठन्ति। तत्र पृथक्धना विभक्तधनाः। अत एव बौधायनः—

क्षत्रविट्शूद्रजातीनां ये स्तो मृतकसूतके ।
तेषां तु पैतृकाशौचं विभक्तानां तु मातृजमिति ॥

ब्रह्मपुराणेऽपि—

क्षत्रविट्शूद्रजातीनां सापिण्ड्यं तु त्रिपूरुषम् ।
ब्राह्मणैरपि जातानामविभक्तार्थभागिनाम् ॥
विभक्तानां तु सर्वेषां मातुर्जातिरसंशयम् ।

मातुर्जातिरित्यनेन मातृवर्णोचितमाशौचमपीत्युक्तं भवति । एवं च विभक्तानां पितृवर्णोचितमाशौचमित्यर्थात् । प्रतिलोमानां तु न सूतकम् । प्रतिलोमा धर्महीना इति स्मृतेः ।

ब्रह्मपुराणे—

दत्तकश्च स्वयंदत्तः कृत्रिमः कृत एव च।
भिन्नगोत्राः पृथक्पिण्डाः पृथक्वंशधराः स्मृताः॥
सूतके मृतके चैव त्र्यहाशौचाः प्रकीर्त्तिताः।

तथा सजातीयविजातीयभेदतिरस्कारेणावरुद्धस्त्रीणामपि त्रिपुरुषमेव सापिण्ड्यमाशौचविषये।

वसिष्ठः — अप्रत्तानां तु स्त्रीणां त्रिपुरुषी सपिण्डतेति विज्ञायते इति।

एतच्चतुर्वर्णसाधारणम्।

ब्रह्मपुराणे—

शूद्राणां दासवृत्तीनां परपिण्डोपजीविनाम्।
परायत्तशरीराणां न कश्चित्पुत्र इत्यपि॥
तस्माद्दास्यां प्रजायन्ते दासाद्धि दास एव हि।

दासाद्दास्यां जातो दासएवेति नामद्योतनार्थः। ऊढायामुत्पन्नस्यौरसपुत्रत्वात्। अतएवास्य क्षेत्रजादयो न सन्ति। एतदेव स्फोरयति —

इमां च मम मर्यादामुल्लंघ्य निवसन्ति ये।
शूद्रास्तु तेषां पुत्रास्तु सन्ति द्वादश एव हि॥

एतद्व्याख्यातं मदनपालेन। शूद्रजातेर्द्विजशुश्रूषा द्विजदास्यं मुख्या वृत्तिः।

तासिमां मम ब्रह्मणो मर्यादां अतिक्रम्य दास्यं परित्यज्य ये शूद्रा निवसन्ति गार्हस्थ्ये तेषां द्वादशापि पुत्रा औरसक्षेत्रजादयो भवन्ति । तथा,

औरसो यदि नो पुत्रस्त्वथ वा पुत्रिकासुतः ।
विद्यते तत्र तेषां तु विज्ञेयाः क्षेत्रजादयः ॥
एकादश पृथक्गोत्रा वंशमात्रकरास्तु ते ।
श्राद्धादि दासवत्सर्वं तेषां कुर्वन्ति नित्यशः ॥
सूतके मृतके वापि त्र्यहाशौचस्य भागिनः ।

एतच्च त्र्यहाशौचं सम्प्रदर्श्यते । तत्र शूद्रे द्वादशाहं षण्नव क्षत्रवैश्ययोरिति । एवं च त्र्यहात्तूदकदायिन इति वचनात्समानोदकानां त्रिरात्रमुक्तं, तदपि शूद्राणां द्वादशाहमेव भवतीत्यूह्यम् । त्रिरात्रमित्यनुवृत्तौ विष्णुः —

परपूर्वासु भार्यासु प्रसूतासु मृतासु च ।
भर्त्तुः पूर्वपतेश्चापि गृहे यस्यैव विद्यते ॥

परपूर्वः पतिर्यासां ताः परपूर्वाः विवाहसंस्कृतं पतिं परित्यज्यान्यमाश्रिता इत्यर्थः । तादृशीषु स्त्रीषु प्रसूतासु मृतासु वा भर्त्तुः पूर्वपतेश्च तथा यस्य च गृहे स्वयं साम्प्रतं विद्यते तस्यापि च त्रिरात्रमाशौचमिति ।

बृहस्पतिः—

अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।
मृतेष्वाप्लुत्य शुध्यन्ति त्रिरात्रेण द्विजोत्तमाः ॥

परपत्नीसुताः क्षेत्रजादयः ।

मरीचिः—

सूतके मृतके चैव त्रिरात्रं परपूर्वयोः ।
एकाहस्तु सपिण्डेषु त्रिरात्रं यत्र वै पितुः ॥

यत्र पितुस्त्रिरात्रं तत्सपिण्डानामेकरात्रमित्यर्थः ।

ब्रह्मपुराणे तु—

पित्रा दत्ता तु या नारी स्वातन्त्र्यादन्यमाश्रिता ।
यं यं श्रितवती भूयस्तत्राशौचं भवेत्त्र्यहम् ॥
मृतायां वा प्रसूतायां नान्येषामिति निश्चयः ।
पदे तु सप्तमे यत्र बलात्कारं हृता भवेत् ।
स्वाभिगोत्रं भवेत्तस्यास्तद्वद् भूयो विशिष्यते ॥
पैतृकं तु प्रसूतायां ततः पौर्विकभर्तृकम् ।
कामादक्षतयोनिश्चेदन्यं भूयो विशिष्यते ॥
तत्र तस्य सगोत्रा सा यमाश्रितवती स्वयम् । इति ।

यंयमिति । सा यं यमाश्रियते तस्यैव स्वैरिणीमरणादिनिमित्तं त्र्यहमाशौचं भवति । न तु तस्य सपिण्डानां पुत्रादीनामपीत्यर्थः । विशिष्यते विभज्यते ।

तमेव विभागमाह—पैतृकमित्यादिना—अक्षतयोनिरिति। पाणिग्राहेणानुपभुक्तैव यदाऽन्यमुपगच्छति तदा तस्यैव गोत्रं लभते इत्यर्थः। अत्र सपिण्डानामशौचाभावैकाहपक्षौ आपदनापद्गुणवद्भेदेन व्यवस्थाप्यौ।

यत्र ब्राह्मणजातीयस्य पितुस्त्रिरात्रं तत्र शूद्रस्य द्वादशाहं सपिण्डानामेकरात्रमिति पक्षे तु शूद्रजातिवत्सपिण्डानां चतूरात्रमिति विवेकः।

कन्यामरणे तु ब्रह्मपुराणे—

आजन्मनस्तु चूडान्तं यत्र कन्या विपद्यते।
सद्यः शौचं भवेत्तस्य सर्ववर्णेषु नित्यशः।
ततो वाग्दानपर्यन्तं यावदेकाहमेव तु॥
अतः परं प्रदत्तानां त्रिरात्रमिति निश्चयः।
वाग्दाने तु कृते पश्चात् ज्ञेयं चोभयतस्त्र्यहम्॥
पितुः परस्य च ततो दत्तानां भर्तुरेव हि।
स्वस्वजात्युक्तमाशौचं स्यात्सूतके मृतके तथा॥

अङ्गिराअपि—

अविशेषेण वर्णानामर्वाक् संस्कारकर्मणः।
त्रिरात्रं तु भवेच्छुद्धिः कन्यास्वह्ना विधीयते॥

तथा, दत्ता कन्या पितुर्गेहे सूयते म्रियतेऽथ वा।
स्वमशौचं चरेत्सम्यक् पृथक् स्थाने व्यवस्थिता॥

तद्वन्धुवर्गेष्वेकेन शुध्यंते जनकास्त्रिभिः ।

पृथक्स्थानेपितुर्भोजनशयनदेवार्चनाद्यन्यस्थाने । तत्र तु प्रसवमरणयोः पितुः संपूर्णाशौचं सपिण्डानां तु त्र्यहमिति हारलतायाम् ।

अत्राऽपि पितुस्त्रिरात्रे शूद्रस्य द्वादशाहं एकाहस्थाने चतुरहः । दशाहस्थाने तु मासामिति योज्यम् । वालाशौचविपये तु अङ्गिराः—

विप्रे न्यूने त्रिभिर्वर्षैर्मृते शुद्धिस्तु नैशिकी ।
द्व्यहेन क्षत्रिये शुद्धिस्त्रिभिर्वैश्ये मृते तथा ।
निवृत्तचूड़के विप्रे त्रिरात्राच्छुद्धिरिष्यते ।
निवृत्ते क्षत्रिये पड्भिर्वैश्ये नवभिरिष्यते ॥
शूद्रे त्रिवर्पन्यूने तु मृते शुद्धिस्तु पञ्चभिः ।
अतऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते ॥
पड्वर्षान्तमतीतस्तु शूद्रः संम्रियते यदि ।
मासिकं तु भवेच्छौचमित्याङ्गिरसभापितम् ॥

निवन्धान्तरे तु द्वादशवर्पस्य मास इति दर्शितम् ।

'मिताक्षराकारस्त्वांगिरसवाक्यान्यनादृत्य वयोऽवस्थाकृतमाशौचं सर्वेपामेव तुल्यमित्याह ।

तदाह व्याघ्रः-तुल्यं वयसि सर्वेपामतिक्रान्ते तथैव च ।
उपनीते तु विपमं तस्मिन्नेवातिकालजामिति ॥

आदन्तजननात्सद्य इत्यादि ।

'यद्वयःकृतमाशौचं यच्च मासत्रये त्रिरात्रं स्यात् षण्मासात्पक्षिणी भवेत् । अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यती'त्यादिना यदतिक्रान्तमाशौचमुक्तम्,

उपनीते मृते यद्विषयं स्वस्वजात्युक्तम्, तास्मिन्नेव तत्कालातिपातकृतमाशौचं, तत्सर्वेषां वर्णानां तुल्यमेव न विषममित्यर्थः। शूद्रस्य तूपनयनस्थाने विवाह एव । षोडशवर्षानन्तरमकृतोद्वाहस्यापि शूद्रस्य मासमेवाशौचम् ।

तदाह शङ्खः—

अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम् ।
मृत्युं समाधिगच्छेच्चेन्मासं तस्यापि बान्धवाः ।
शुद्धिं समाधिगच्छन्ति नात्र कार्या विचारणा ।

मातापित्रोस्त्वाचूडादपि त्रिरात्रमेव । आद्विवर्षे प्रेते मातापित्रोर्नाशौचम् ।

शौचमेवेतरेषामेकरात्रं त्रिरात्रं चेति पारस्कर वचनात् । मातापित्रोस्त्रिरात्रमन्येषामेकरात्रमित्यर्थः ।

मनुरपि—

निरपत्यः पुमान् शुक्रमुपस्पृश्य विशुध्यति ।
बैजिकादभिसम्बन्धादनुबध्यादघं त्र्यहम् ॥

वैजिकात् जन्यजनकभावलक्षणसम्बन्धात् त्र्यहमाशौचमित्यर्थः। इदमपि शूद्रस्य द्वादशाहम्।

अथ शूद्रप्रेतानिर्हरणे विशेषः।

मनुः—

दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्।
पश्चिमोत्तरपूर्वैस्तु यथायोग्यं द्विजातयः।

विष्णुः—मृतं द्विजं न शूद्रेण हारयेत्।

शूद्रं द्विजेन पितरं च पुत्रा निर्हरेयुः। न द्विजं पितरं मातरमपि शूद्रा इति। शूद्रं द्विजेन नेति। एतत्पुत्रातिरिक्तविषयम्।

तदेवाह—

पुत्राः पितरं निर्हरेयुः। शूद्रमपीत्यर्थः।

अस्यापवादः—

न द्विजं पितरं मातरमपि शूद्रा इति। एतच्च सत्सु द्विजातिषु।

यदाह याज्ञवल्क्यः—

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण हारयेत्। इति।

ब्रह्मपुराणे—

स्वगोत्रजैर्गृहीत्वा तु चितामारोप्यते शवः।
अधोमुखो दक्षिणदिक्चरणस्तु पुमानपि॥

उत्तानदेहा नारी तु सपिंडैरपि बन्धुभिः ।
एतच्छूद्रनिरग्निद्विजविषयम् ॥

आहिताग्निविषये—

दक्षिणाशिरसम्भूमौ बर्हिष्मत्यां निवेशयेत् । इति कात्यायनोक्तेः ।

ब्रह्मांडपुराणे—

दरिद्रस्तु न दग्धव्यो नग्नः कस्यांचिदापदि ।
केनापि वस्त्रखण्डेनाच्छादितव्यः प्रयत्नतः । इति ॥
एतत्सर्ववर्णसाधारणम् ।

यमः—

न शूद्रो यजमानं वै प्रेतीभूतं समुद्धरेत् ।
यस्यानयाति शूद्रोऽग्निं तृणकाष्ठहवींषि च ॥
प्रेतत्वं हि सदा तस्य सचाधर्म्मेण युज्यते ।

स च शूद्रः । दाहस्तु शूद्रस्यामन्त्रकएव । निषेकादिः श्मशानांतो मन्त्रैर्यस्योदितो विधिरिति मनुना श्मशानेऽपि मन्त्रपर्युदासप्रदर्शनात् ।

तोयांजलिदाने तु ब्रह्मपुराणे—

आदौ तु वस्त्रं प्रक्षाल्य तेनैवाच्छादितस्ततः ।
कर्त्तव्यं तैः सचैलं तु स्नानं सर्वमलापहम् ॥
ततः पाषाणपृष्ठे तु सर्वैर्देयं तिलोदकम् ।

एकैकेन देयास्तु विप्रेणाञ्जलयो दश ।
राज्ञे द्वादश देयास्तु वैश्याय दश पञ्च च ॥
त्रिंशच्छूद्राय देयास्तु प्रेतभूमिगताय च ।
एतत्त्वेकैकाञ्जलिदानपक्षे ॥
अञ्जलिवृद्धिपक्षे तु नायं संख्यानियमः ।

तदुक्तं तत्रैव ।

दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु ।
एकस्तोयाञ्जलिस्त्वेवं पात्रमेकं च दीयते ॥
द्वितीये द्वौ तृतीये त्रींश्चतुर्थे चतुरस्तथा ।
पञ्चमे पञ्च षट् षष्ठे सप्तमे सप्त एव हि ।
अष्टमेऽष्टौ च नवमे नवैव दशमे दश ।
येन स्युः पञ्च पञ्चाशदतोऽपांजलयः क्रमात् ।
तोयपात्राणि तावन्ति संयुक्तानि तिलादिभिः ॥
देशधर्मान्पुरस्कृत्य प्रेतपिण्डान्वयांस्यपि ।
देयस्तु दशमः पिण्डो राज्ञां वै द्वादशे ऽहनि ॥
वैश्यानां पञ्चदशमे देयस्तु दशमस्तथा ।
शूद्राणां दशमः पिण्डो मासे पूर्णे हि दीयते ॥
पूर्णे हीति मासपूरके ऽह्नीत्यर्थः ।
एतद्दशपिण्डदानपक्षे । तथा च पिंडसङ्ख्यामाह

पारस्करः--

ब्राह्मणे दशपिण्डास्तु क्षत्रिये द्वादश स्मृताः ।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्त्तिताः ॥
प्रेतेभ्यः सर्ववर्णेभ्यः पिण्डान्दद्याद्दशैव च। इति ।

शूद्रस्य पर्णशरदाहादौ त्रैरात्राशौचपातेऽपि दशैव पिण्डा भवन्ति न ततो न्यूनाः ।

तदाह शातातपः--

आशौचह्रासेऽपि पिण्डान्दद्याद्दशैवचेति । तत्र दाने प्रकारमाह—पारस्करः—

प्रथमे दिवसे देयास्त्रयः पिंडाः समाहितैः ।
द्वितीये चतुरो दद्यादस्थिसंचयनं तथा ॥
त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादीन् क्षालयेत्तथा ।
एकोद्दिष्टं च कर्त्तव्यं श्राद्धकर्म्म ततः परम् ॥

ततः परं चतुर्थेह्नीत्यर्थः ।

ब्रह्मपुराणे--

सद्यः शौचेऽपि दातव्यः सर्वेपि युगपत्तथा ।
त्र्यहाशौचे प्रदातव्यः प्रथमे त्वेक एव हि ॥
द्वितीये ऽहानि चत्वारस्तृतीये पञ्च चैव हि। इति ।

सर्वेष्वप्याशौचपक्षेषु दश पिण्डा अवश्यं देयाः । तेषां शरीरपूरकत्वात् । दशभ्योऽधिकानां पिण्डानां तु

दाने प्रेतोपकाराधिक्यमुन्नेयम्। कचिदापदि शून्यैरपि प्रेतशरीरनिष्पत्तिर्भवति तत्र शास्त्रेण तथैव बोधनादिति ज्ञेयम्। अविशिष्टमन्यसाधारणत्वान्नोक्तं गोविन्दार्णवाशयवधार्यम्।

अथैकोद्दिष्टनिर्णयः।

तत्राद्यं श्राद्धमेकादशेऽहनीत्येके।

एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम्।
चतुर्णामपि वर्णानां सूतकं तु पृथक् पृथक्॥ इति

वृद्धवसिष्ठवचनात्। नचाशुद्धस्य तदा कथमधिकार इति वाच्यम्।

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि।
कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः॥

इति शङ्खवचनात्।

सूतकान्त इत्यपरे। अथाशौचव्यपगम इति विष्णुवचनात्। तत्र देशाचारतो व्यवस्था। एवं वृषोत्सर्गोऽपि। तत्र वृषोत्सर्जनहोमस्य वैदिकमन्त्रसम्बन्धित्वात्तत्र न शूद्रस्याधिकार इति होमरहित एव तस्मिन् शूद्रोऽधिकारी। तत्र च ब्राह्मणनिमन्त्रणादि तत्पूर्वदिने तद्दिने वा कर्त्तव्यम्। तत्प्रकारश्च उक्तः सर्ववर्णसाधारणोऽन्यत्रैव। विशेषस्तु—

दक्षिणं चरणं विप्रः सव्यं वै क्षत्रियस्तथा ।
पादावादाय वैश्यो द्वौ शूद्रः प्रणतिपूर्वकम् । इति ॥

निमन्त्रणं चेत्क्वचिच्छाखायां मन्त्रपाठोऽप्यस्ति । तत्र तच्छाखीयोपदिष्टशूद्रकर्तृके निमन्त्रणे तत्स्थाने नमः-शब्द एव मन्त्रत्वेनाऽवधार्यः । येषां तु न मन्त्रः किन्तु वाक्यमेव तत्र तदुपदिष्टशूद्रेणापि वाक्यमेव पठनीयं न नमःशब्दोऽपि । एवं पाद्यासनादिदानेष्वपि नमो-मन्त्रप्रयोगाप्रयोगौ ज्ञेयौ । पाद्यदानानन्तरं तु ब्राह्मणः सव्यं चरणं प्रक्षालनार्थं शूद्राय प्रयच्छेत् । 'सव्यं शूद्रायेति' वचनात् । शेषं समानम् । सपिण्डीकरण-कालस्तु संवत्सरान्तो मुख्यः ।

सपिण्डीकरणं कुर्याद्यजमानस्त्वनग्निमान् ।
अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ ॥

द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासे वा । 'एकादशेऽपि वा मासि मङ्गलं स्यादुपस्थित'मिति भ-विष्यपुराणात् । तदशक्तावेकादशो मासो मुख्यो भ-विष्यपुराणस्वरसात् । प्रधानकालप्रत्यासत्तेश्च क्रम-नियामकत्वात् । तदशक्तौ संवत्सरान्ते विसर्जनं न च मासमित्येकम् । इति पैठीनसिवचनान्नवमो मासः । तदशक्तौ पूर्णे संवत्सरे । षण्मासे त्रिपक्षे वा यदहर्वा

वृद्धिरापद्येतेति गोभिलवचनात् षण्मासः। तदशक्तौ त्रिमासे भविष्यदुक्तत्वात्। ततस्त्रिपक्षः। अत्राशौचव्यपगमादूर्ध्वं द्वादशसु दिनेषु क्रमेण मासिकानि कृत्वा द्वादशेऽहनि द्वादशमासिकं समाप्य त्रयोदशेऽहनि सपिण्डनमित्येके। तदशक्तावेकस्मिन्नेव दिने द्वादशमासिकानि कृत्वा तत्रैव सपिण्डनं कार्यम्।

मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुं प्रति।
द्वादशाहेऽथवा कुर्यादेकाहे द्वादशेऽथवा। इति मरीचिवचनात्।

एवं वृद्धिविषयेऽपि। तत्र यदहर्वा वृद्धिरापद्येत तदहरिति गोभिलवचनात्। एषां च कालानां मध्ये द्वादशाहः प्रशस्त इत्याह व्याघ्रः।

आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात्।
अस्थिरत्वाच्छरीरस्य द्वादशाहः प्रशस्यते। इति॥

वृद्धमनुः—

द्वादशेऽहनि विप्राणामाशौचान्ते तु भूभृताम्।
वैश्यानां तु त्रिपक्षादावथवा स्यात्सपिण्डनम्। इति॥

शूद्रस्य तु द्वादशाह एव मुख्यः सपिण्डनकालः। तदाह सपिण्डतानुवृत्तौ विष्णुः—

मन्त्रवर्जं हि शूद्राणां द्वादशेऽहनि कीर्त्तितम्। इति।

कर्तुस्तात्कालिकी शुद्धिरितिवचनादाशौचमध्ये-ऽपि तन्न विरुध्यते इति मध्यदेशाचारः।

पौरस्त्यास्तु 'अथाशौचव्यपगमे' इति विष्णुवचनात्,

शूद्रस्य दशमः पिण्डो मासे पूर्णे प्रदीयते ॥

इत्यादिवाक्यानुरोधाच्च सूतकान्तएव सापिण्डनमित्याहुः।

सपिण्डीकरणं चेदगेकोद्दिष्टपार्वणोभयात्मकम्। तत्र प्रेतस्थाने एकं ब्राह्मणमेकोद्दिष्टार्थं ताम्बूलादिना निमन्त्र्य पितामहादिपार्वणार्थं प्रत्येकं युगपद्वा वैश्वदेवपूर्वं ब्राह्मणान्निमन्त्रयेत्। तत्र निमन्त्रणवाक्ये शूद्रस्य अस्मत्पितामहस्य अमुकगोत्रस्य स्थाने क्षणं दत्वा भवद्भिः प्रसादः कर्त्तव्यः इत्यादिप्रयोगः कार्यः। यस्य शूद्रस्य पिता द्विजातिः। पितुः शूद्रत्वेऽपि वा तत्पितृपितामहा द्विजातयः, तदा ब्राह्मणक्षत्रियवैश्यजात्यपेक्षया क्रमेण शर्म्मवर्म्मगुप्तप्रयोगाः। यस्य कुले पित्रादयोऽप्यवरुद्धादिजातास्तेनाऽवरुद्धादिजातः पित्रादिरशुद्धोऽपि परिणीतजातैः पितामहादिभिर्योजनीयः। जन्यजनकभावस्य विद्यमानत्वात्।

तत्रैकोद्दिष्टकर्त्तव्यमाह कात्यायनः—अथैकोद्दिष्टमेकं पात्रमेकोऽर्घ एकः पिण्डः नावाहनं नाग्नौकरणं नात्र वैश्वदेवाः सुहितामिति तृप्तप्रश्नः सुस्वदितमित्यनुज्ञानमुप-

तिष्ठतात्पक्षस्थानेऽभिरम्यतामिति विसर्गेऽभिरताःस्म इत्यपर इति ।

याज्ञवल्क्यः—

एकोद्दिष्टं देवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥

मत्स्यपुराणे—

स्वदितं विकिरे ब्रूयाद्विसर्गे चाभिरम्यताम्। इति ।
विकिरपिण्डस्थाने स्वदितमित्येव ब्रूयात्।

न विकिरपिण्डं दद्यादित्यर्थः ।

यत्त्वाश्वलायनगृह्यपरिशिष्टे—

एकोद्दिष्टं तु यच्छ्राद्धमित्युपक्रम्य—
उच्छेषणं भूमिगतं विकिरं लेपमौदकम् ॥
अनुप्रेतेषु विसृजेदप्रजानामनायुषम् ।
अनुदिश्य तु प्रेतस्य सर्वत्रैवं प्रयुज्यते ॥
एकं पवित्रमेकं पिण्डं नाग्नौकरणं न स्वधा नाभिरम्यताम् ।
स्वस्त्यस्त्वु विसृजेदेवं सकृत्प्रणववर्जितम् ।
एकोद्दिष्टस्य पिण्डे तु अनुशब्दो न विद्यते ॥
पितृशब्दं न कुर्वीत पितृहा चोपजायते ।

औदकं उदकसम्बन्धिनं लेपम् । अन्नोदकहस्त-

स्य दर्भेषु मार्जनामित्यर्थः। अनुप्रेतेष्विति । अनुशब्दः पूर्वत्ववाची। पूर्वमृतेषु मध्ये ये अप्रजाः तेषां विसृजेत्। अनायुषामित्यायुःशब्दः संस्कारोपलक्षकस्तेनासंस्कृतानामित्यर्थः ।

तथा च मन्त्रलिङ्गम्—

असंस्कृतप्रमीता ये त्यागिन्यो याः कुलस्त्रियः ।
दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम्। इति।

अनुद्दिश्येति । प्रेतस्योद्देशेन यत्रैकचनैकोद्दिष्टे पार्वणादौ वा उत्सृज्यते तत्र सर्वत्रैवमेवानुप्रेतेपूच्छेषणविकिरादि देयम् । तत्रैवं व्यवस्थापयन्ति । सपिण्डीकरणप्राग्भाविषु एकादशाहादिषु विकिरस्थाने स्वाहेति शब्दोच्चारणं स्वधाकारप्रतिषेधश्च । नाभिरम्यतामिति। 'ये च त्वामत्रान्वि'ति मन्त्रोऽनुशब्देन लक्ष्यते स न प्रयुज्यत इति +++++ शब्दामिति । पितरोऽत्र दिव्यास्तेषां शब्दो वसुरुद्रादित्यरूप इत्यादिस्तन्नोच्चारयेत् । अत्रान्यः श्राद्धेतिकर्त्तव्यताविशेषस्सर्वसाधारणः सर्वत्र सुप्रसिद्ध इति न लिख्यते ।

ननु शूद्रस्य कथं गोत्रप्रवरसम्बन्धः । अद्विजत्वात् । द्विजानामेव गोत्रप्रवरप्रवर्त्तकत्वात् । तथा च

मत्स्यपुराणे मनुः—

ऋषीणां नामगोत्राणि वंशावतरणं तथा ।
प्रवराणां तथा साम्यमसाम्यं विस्तराद्वद ॥ इति

प्रश्ने—

मत्स्य उवाच—

भृगुश्च लोम्नश्च सुतां दिव्यां भार्यामविन्दत ।
तस्यामथ सुता जाता देवा द्वादश याज्ञिकाः ॥
मनवो भानवश्चैव सुजन्यः सुजनस्तथा ।
क्रतुः शुचिश्च मूर्द्धा च जन्यश्च वसवश्च ह ॥
प्रभवश्चाव्ययश्चैव दक्षो द्वादशकस्तथा ।
इत्येते भृगवो नाम देवा द्वादश कीर्त्तिताः ॥
पौलस्त्यो जनयेद्विप्रं देवानां तु कनीयसम् ।
च्यवनं तु महाभागं मन्दधानं तथाऽप्यसौ ॥ इति।

अत्र सर्वत्र द्विजानामेव गोत्रप्रवर्त्तकत्वमभिहितम्। अत एव द्विजानामेव गोत्रमुपदिष्टं कल्पसूत्रकारैः। क्षत्रियवैश्ययोस्त्वौपदेशिकप्रवराभावेऽप्यतिदेशतस्तत्प्राप्तिः ।

यदाहाऽऽश्वलायनः—यजमानस्यार्षेयान् प्रवृणीते। पौरोहित्यान् राजन्यविशामिति ।

आधानादिषु प्रवरातिदेशात्तद्द्वारा गोत्रमप्यतिदिश्यते । यतोऽमुकगोत्राणाममुकप्रवराणामिति गो-

त्रमुपलक्षणीकृत्य प्रवरा भवन्ति। शूद्रस्य तु यज्ञसंयोगाभावादतिदेशेनापि न तत्प्रसक्तिः। यज्ञसंयोगाभावश्च शूद्रस्य कूर्मपुराणे दर्शितः।

ससर्ज ब्राह्मणान् वक्त्रात् क्षत्रियांश्च भुजाद्विभुः।
वैश्यानूरुद्वयादेष पद्भ्यां शूद्रान् पितामहः॥
यज्ञनिष्पत्तये ब्रह्मा शूद्रवर्जं ससर्ज ह॥ इति।

अत्राहुः। कमपि सत्कुलोत्पन्नं मूलपुरुषं प्रसिद्धमुपलक्षणीकृत्य तन्नाम्ना गोत्रव्यवहारः।

ये च परिणीतायां शूद्रायां द्विजातिभ्य उत्पन्नास्तेषां च यावत्पिण्डनिवृत्तिस्तावत्तद्गोत्रेणैव व्यवहारात्तत्परम्परायामपि तद्गोत्रेणैव व्यवहरन्तीति लोके गोत्रव्यवहारः शूद्राणाम्। अनेनैवाभिप्रायेण बौधायनः—

चतुर्णामपि वर्णानां पितॄणां पितृगोत्रतः॥ इति।

उपदेशकब्राह्मणगोत्रमेवास्य गोत्रमित्यन्ये। अत एव शूद्रलक्षणमित्थमाचक्षते परीक्षकाः।

गोत्रप्रवरसम्बन्धो नास्ति येषां कथञ्चन।
उपदेशातिदेशाभ्यां शूद्रा वर्णेषु ते स्मृताः॥ इति।

हेमाद्रिस्तु—शूद्राणां गोत्रस्याभावाद्गोत्रतः पिण्डदानमित्येतद्द्विजात्युत्पन्नशूद्रविषयं भवितुमर्हति। अथवा 'तस्मादाहुः प्रजाः सर्वाः काश्यप्यः' इति श्रुतेः

सर्वेषां चैव शूद्राणां काश्यपं गोत्रमर्हति। तथाच व्याघ्रपात्—गोत्रनाशे तु काश्यप इति।

अथ श्राद्धनिर्णयः।

'तत्र भार्यारतः शुचिर्भृत्यभर्त्ता श्राद्धक्रियापरः' इति शूद्रस्य श्राद्धे सामान्यतोऽधिकारो दर्शितो याज्ञवल्क्येन। श्राद्धं प्रकृत्य मत्स्यपुराणेऽपि—

शूद्रोऽप्यमन्त्रवत्कुर्यादनेन विधिना ततः॥ इति।

एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धं च सर्वदा नमस्कारेण मन्त्रेण कुर्याच्चामान्नवत् बुध इति। सामान्यं साधारणम्। वर्णविशेषाऽनुपादानेन प्रवृत्तं सामान्यमनग्निब्रह्मचारिविधुराविधवाशूद्रादीनामपि कर्त्तव्यममावास्यायुगादिमन्वादिग्रहणव्यतीपातादिनिमित्तं नित्यं नैमित्तिकं काम्यं वा तत्सर्वमुच्यते। आमान्नवादिति। आमेनैव कुर्यादित्यर्थः। तदाहोशनाः—

आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा।
आमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात्सदैव हि॥

यत्तु वराहपुराणे—

सच्छूद्रस्य पाकश्राद्धेऽधिकारो दर्शित इति।

+ + + + + कर्त्तव्यं पाके भोजनमेव च।

शुश्रूषामभिपन्नानां शूद्राणां च वरानने।

दिने त्रयोदशे + + + + + + + द्विजान् ॥
पञ्चविधिः प्रयोक्तव्यः शूद्राणां मन्त्रवार्जितः ।
अमन्त्रस्य च शूद्रस्य विप्रो मन्त्रेण गृह्यते ॥ इति ।
अयमत्यन्तं लोकविद्विष्टत्वाद्युगान्तरविषय इत्याहुः ।

मत्स्यपुराणे—

आमश्राद्धं यदा कुर्याद्विधिवच्छ्राद्धदस्तदा ।
तेनाऽग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत् ॥

अत्र यदा तदेति द्विजाभिप्रायम् । शूद्रस्य नित्यमामश्राद्धविधानात् । युगान्तराभिप्रायं वा । तेनैवेत्येवकारोऽप्यर्थः । पायससक्त्वादिपिण्डानामपि विधिदर्शनात् । अग्नौकरणं तु शूद्रस्यापि भवति । तथा च हेमाद्रौ भविष्यपुराणम्—

धर्मेप्सवश्च धर्मज्ञा यदि शूद्रः प्रवर्त्तते ।
अग्नौकरणमन्त्रश्च नमस्कारो विधीयते ॥
आवाहनादि कर्त्तव्यं तथा शूद्रेण तच्छृणु ।
देवानां देवनाम्ना तु पितॄणां नामगोत्रतः ॥
पिण्डादीन्निर्वपेद्धीरनामतो गोत्रतस्तथेति ।

तच्च जलादौ कार्यम् ।

अग्न्यभावे तु विप्रस्य पाणौ वा च जलेऽपि वा ।
अजाकर्णेऽश्वकर्णे वा गोष्ठे वा च शिवान्तिके ।

इति मत्स्यपुराणात्। अत्र यद्यपि सामान्यतः शूद्रस्य श्राद्धमात्रे ऽधिकार उक्तस्तथापि यानि साग्नीनामेव विहितानि पिण्डान्वाहार्यकादीनि तत्र शूद्रा नाधिक्रियन्ते। तेषामाहि++++++

[ अत्रग्रन्थस्त्रुटितः ]

++++"" श्चैव महादेवेति च क्रमात्।

मृदाहरणसङ्घट्टप्रातिष्ठाकालमेव च।
स्नपनं चैव पूजार्थं नमस्कारो विसर्जने॥

ॐ हरायनमः—मृदमादत्ते।
ॐ महेश्वराय नमः सङ्घट्टयामि॥
ॐ स्वयम्भुवे नमः प्रतिष्ठापयामि।
ॐ शूलपाणये नमः आवाहयामि॥
ॐ पिनाकधृषे नमः स्नपयामि।
ॐ महादेवाय नमः पूजयामि॥
ॐ पशुपतये नमः नमस्करोमि।
ॐ महादेवाय नमः क्षमस्व विसर्जनम्॥
ॐ शिवाय क्षितिमूर्त्तये नमः।
ॐ भवाय जलमूर्त्तये नमः।
ॐ रुद्राय अग्निमूर्त्तये नमः॥
ॐ उग्राय वायुमूर्त्तये नमः।

ॐ भीमाय आकाशमूर्त्तये नमः ॥

ॐ पशुपशतये यजमानमूर्त्तये नमः ।

ॐ महादेवाय सोममूर्त्तये नमः ॥

ॐ ईशानाय सूर्यमूर्त्तये नमः ।

ॐ दाक्षिणामूर्त्तिरूपाय तस्मै श्रीगुरुमूर्त्तये नमः ॥

पयस्येव तीर्थे विसर्ज्याः ।

भौमेऽर्के भृगुजे मघागृहानिशासतम्यनङ्गाह्वया
नन्दाजन्मदिनेषु सन्धियुगले नो तर्पणं स्यात्तिलैः ॥
नोद्वाहव्रतचौलवृद्धिषु समार्द्धार्धैकमासे क्रमा-
न्नो दुष्येत्तु मृतौ महालयगयापुण्याहतीर्थातिषु ॥
वृद्धौ प्राङ्मुखमेव सव्यमृजवो दर्भास्तिलार्थो यवैः
पिण्डा वा पितृमन्त्रवर्जितजपो युग्मं द्विजा न स्वधा ॥
दैवं तीर्थमुशन्ति नो मधुमतीं तृप्तौ च सम्पन्नवत्
प्रीयन्तामिति चाक्षयेति प्रणुयात्कर्कन्धुदध्यक्षतैः ॥

दिङ्मात्रमेतदुक्तम् । अन्यत्सर्वं गोविन्दार्णव एव प्रपञ्चितमित्युपरम्यते ।

शिष्टानामवधिर्गुणैकजलधिः सत्सम्पदां शेवधिः
श्रीमत्केशवदासतः समजनि श्रीमान्पिलाजीति यः ॥
तस्यैतस्य कृते कृतेऽत्र कृतिना कृष्णेन शेषेण स-

च्छूद्राचारशिरोमणौ पितृमख ( प्रख्यो ) विवेको ऽभवत् ॥ १ ॥

गुणागुणपरीक्षणक्षणविचक्षणोऽनुक्षणं
वितीर्णबहुदक्षिणः स्वजनरक्षणे दक्षिणः ॥
जयत्यतुलविक्रमोज्ज्वलितदक्षिणाशामुखः
प्रतिक्षपितशात्रवः क्षितितले पिलाजीनृपः ॥
हरिचरणसरोजावाप्तजन्मा द्विजन्मा-
ऽर्पणाविहितविभूतिः स्वर्धुनीपूर्वजन्मा ॥
व्यरचयदतियत्नात्केशवस्यात्मजन्मा
सकललघुनिबन्धं शेषकृष्णं प्रयुज्य ॥ २ ॥

इति श्रीहरिचरणसरोजप्रसूतवर्णवंशावतंसपरमवैष्णव
श्रीपिलाजीसमुद्योजितशेषकृष्णविरचितः
शूद्राचारशिरोमणिः समाप्तः ।



THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES

( SANSKRIT )

SARASVATALOKA

Edited by

GOPINATH KAVIRAJ, M. A

'rana I ( In progress )

(a) Mangalam, etc, by Nārāyaṇa S'āstri Khiste.

Mimansaka mata samgraha, by Haranchandra Bhaṭṭāchārya.

S'rīmad Āchārya Mandana Mis'ra by Chinna Swami S'astri.

(d) Bhagavato Buddhasya Chaitama Upades'as'cha, by Gopinatha Kaviraj.

ana I ( Supplement )

nskrita Kavi Parichaya-(Bharavi) by Nanda Kishore Sharma

II ( In progress )

'ārada Prasādanam by Nārāyāna S'āstri Khiste.

Chūḍāmani Dars'anam by S'as'adhara Tarkachūḍāmaṇi.

To be had of

The Superintendent

Government Press, U. P.,

Allahabad.